# आह्निकाचारतत्त्वावशिष्टम् ।

श्रीमन्महाराजाधिराज-कोचविहाराधिपतिमन्त्रिमहोदय-
स्वर्गीय-शिवप्रसादशर्म्मणा सङ्कलितं ।

श्रीयुक्त पण्डित कोकिलेश्वरभट्टाचार्य्येण एम्. ए.
विद्यारत्नोपाधिकेन सम्पादितम् ।

ज्ञानोदययन्त्र-मुद्रित-प्रथम-संस्करणात्परं
रङ्गपुर-साहित्यपरिषदा
पुनर्म्मुद्रितम् ।

श्रीयुक्त पूर्णेन्दुमोहन-सेहानवीशमहाशयेन
सहकारिसम्पादकेन
प्रकाशितम् ।

शकाब्दाः १८३४ ।

षड्मुद्रामात्रं मूल्यम् ।

## उत्सर्गपत्रम् । *




अशेषनरपतिसमभ्यर्चित-विविधकीर्त्तिकथा-निनादित-

दिङ्मुख-सदासम्पादित-विपुल-प्रजामण्डल-

कल्याण-समाक्रान्तपरलोकपुण्यगति-

कोचविहारमण्डलाधीश-

**श्रीश्रीमन्महाराज-नृपेन्द्रनारायण-**

भूपबाहादुर—जि-सि-आइ-इ-सि-वि-महोदयस्य

**पुण्यस्मृतिमुद्दिश्य**

आत्मतुष्ट्यै

सादरं सबहुमान स्मृतिशतोच्छ्वसितहृदयं

समुपादीयते ग्रन्थोऽयम्

अभिवादनपुरःसरं—

श्रीप्रमदारञ्जनेन ।

---

* *Vide* H. H. Office letter No. 184 dated the 19th May 1910 conveying Sanction for dedication.

# शिवप्रसादवंशविवृतिः ।

विदितास्यात्र रङ्गपुरान्तर्गत-नावडङ्गायामशेषगुणगरिमोज्ज्वला दानमानतोषितविविधपर्षद्दलाः सदाचारवलाद्दाक्षिण्ट्कोत्तिलक्ष्म्यंशावतारकृतानुग्रहा पुण्यविग्रहा द्विजवर्य्येभ्यो विश्राणितभूमिभागा महाभागा वकसीतिराजदत्तपदमहिमपरिचिता भुवो भर्त्तारः। अस्यैव च द्विजकुलस्य आदिपुरुषो नवद्वीपे पुरुषोत्तम इव लक्ष्म्यालिङ्गितविग्रहो दक्ष इव प्रारब्धाशिवसमागमकुशलयज्ञो दक्षो नाम प्रादुरासीत्। श्रूयते चास्मादेकादशाधस्तनपुरुषस्य श्रीमतः श्रीमन्तेत्याख्याधरस्य जेष्ठसूनोः पुण्योपचयपवित्रीकृतान्तर्हृदयस्य हरिदेवस्य चित्तचमत्कारिणो हारिणो भुवि विचरन्ती विविधा किंवदन्ती। कुलकीर्त्तिधुरन्धरोऽसौ विविधदेश पर्य्यटनलब्धगुण-गरिमलब्धवर्णो महतो महिम्न आधारः कदाचित् कामाख्याख्यातमहापीठे देवीपादपद्मयुगलध्याननिरतहृदयो वहूनि दिनानि वसतिं चक्रे। एकदा तु तस्मात् प्रत्यावृत्तः कोचविहारभूपते राजधानीं प्रविवेश। पूर्व्वत एव श्रुततद्वृत्तान्तेन भूपालेन सादरं स्वात्मराज्ये कमपि प्रधानमधिकारं सवहुमानं ग्राहितो, विषयसमर्पणादिना च नितरां सम्मानितः। किन्तु जन्मजरायातनाजटिले चास्मिन् संसारे, जन्मतः प्रभृति वीततृष्णममुं न शशाक चाकर्षितुं विषय-सेवा। झटित्येव चासौ कतिपयैरेव दिवसैः स्वयमेव परित्यक्ताधिकारः समुपजातवैराग्यः, पुनरपि तीर्थदर्शनादिना चालयितुमन्तर्मलं उररीचकार पर्य्यटनवृत्तिं।

परित्यक्ते च तेन गृहस्थाश्रमे, स्वीकृते च वानप्रस्थोचिताचारे, समवलम्बितायां च तेन तैर्थिकवृत्तौ, तत्पुत्रो रामदेवः भ्राता भवानीप्रसादेन सह, पितुः पूर्व्वाधिकारे कोचविहारे चागत्य, पितुरेव सम्बन्धाल्लब्धपरिचयस्य विहाराधीश्वरस्य प्रीतिभाजनं वभूव, तत्र च वक्सीतिसंज्ञकाधिकारे सपदि नियोजितः। तस्मादेव कालादारभ्य वंशोऽयं वक्सीपदभाक् श्रूयते। तेनैव हि भूपालेन भवानीप्रसादः विपुलं भूमिखण्डं प्रदाय, विविधदानमानतोषितः, विहारनगरस्यैवोपकण्ठे नावडङ्गानगरे संस्थापितः। प्रोथितश्चानेन वक्सीवंशस्य चैवं मूलतरुस्तत्र नगरे। एवं किल संस्थापितैर्वक्सीवंश्यपुरुषैर्नगरसम्पद्वर्द्धनावहितचित्तैर्देशान्तरेभ्यः द्विजातिवर्गानानीय क्रियाकुशलान्, तत्रैव ब्रह्मत्रादिसमर्पणादिना वासगृहनिर्म्माणादि-व्यापृताः वहवः द्विजातयः संस्थापिताः, कृताश्च वहुशः नगरस्य मठवापीतड़ागचैत्यादिभिः वहुमुख्यः शोभालङ्कृतयः। अद्यापि च दृश्यन्ते वक्सीवंशप्रदत्तभूसम्पत्तिभुजो वहवो ब्राह्मणाः।

भवानीप्रसादस्य स्वर्गतिलाभानन्तरं, तत्पुत्रो रघुप्रसादः कोचविहारराजधान्यां राजद्वाराधिपत्यं लेभे। पुरस्कृतश्चासौ आशाशोटाख्येन छत्रचामरादिना राजार्पितसम्मानचिह्नेन महाराजेन।

१८३८ खृष्टीयाव्दे रघुप्रसादसूनुरस्यैवाह्निकाचारतत्त्वावशिष्टग्रन्थस्य सङ्कलयिता श्रीमान् शिवप्रसादः पितुरधिकारपदवीं प्राप। अनेनैव कृतिना चायं वंशः ख्यातिशिखरमधि-

करोह। बाल्यात् प्रभृत्येवायं कुशाग्रीयतया वृद्धेः, अभ्यसनेन च विविधशास्त्राणां, संस्कृतविद्यायाः पारदर्शितामात्मानं निनाय। विविध-विद्याज्ञानसुसंस्कृतचित्ततया, जटिलकार्य्य-नीतिचतुरतया च, सर्व्वातिगनैपुण्यप्रदर्शनतया च तेषु तेषु राजनीतिविज्ञानकलासमुचितकार्य्येषु, भूपतेर्नरेन्द्रनारायणस्य राज्याधिकारसमये, अल्पैरेवाहोभिरसौ शिवप्रसादः राजमन्त्रि-पदवीमधिचकार। मन्त्रिपदभाजि चास्मिन् विहारराज्यस्य सर्व्वतोमुखो द्रुतमभ्युन्नतिः प्रादुरियाय। अमुष्यैव प्रयत्न-सहस्रेण, नानादिगन्तसमागता विविधबुधमुख्या, भूपतितः सम्माननां वृत्तिं कीर्त्तिमप्यासादितवन्तश्चिरं प्रीणिता बिहारे बहुवर्षं यावत् कृतवासतया बभूवुः। असावपि नृपति-राज्यतन्त्रकार्य्यबाहुल्यादविरतव्यापृतचित्तोऽपि यदैव किञ्चिद-वसरच्छिद्रमुपलेभे तदैव विद्वद्भिरेतैः सार्द्धं विविधशास्त्रालाप-दिवसमवन्ध्यं चक्रे।

गते च काले कतिपये, ब्रिटिशसिंहनियोगेन कति-दिवसान् नरेन्द्रनारायणः शिक्षालाभसौकर्य्याय नवद्वीप-नगरे यथाभिलाषमुवास। शिवप्रसादोऽपि तदानीं भूपतेर-प्राप्तवयस्कतया तेनैव सार्द्धं निखिलकार्य्यदर्शी तत्र आत्मन-श्चावस्थितिमकल्पयत्। तस्मिन्नेव वर्षे चायं दुश्चिकित्स्यगदा-क्रान्तः कलेवरं जाह्नवीसलिलस्रोतसि विजहौ। षट्पञ्चाश-दधिकाष्टादश-खृष्टीयाब्दे राजमन्त्री, निधाय प्रकृतिमण्डली-नामन्तर्हृदये शोकशङ्कुं, कृत्वा च तिरोधानजविरहदुःखा-र्त्तनादाकुलं विहारमण्डललोककुलं, लोकानां पुरातनपदवी-

मारुरश्मुर्दिवमुदगात् ;—अजनि च विनापि रजनीं घनशोक-गाढ़तमसाच्छन्ना राजधानी ।

अस्य द्वौ तनयावम्बिकाप्रसादकाशीप्रसादौ बभूवतुः । अनयोः कनीयान् निरन्वयस्वास्तमजनि । ज्यायानम्बिका-प्रसादः पितुः पदमलञ्चकार । अनेनैव स्वभुजवीर्य्यविक्रम-विस्मय-रसविमुग्धात्तदानीन्तनादासामाख्यप्रदेश-शासकात्कमि-शनारसाहेवतश्चासादितौ द्वौ नालिकराजौ, तावद्यापि विहारभूपतेः वामभवनद्वारदेशमधिकुर्व्वन्तौ दर्शकमण्डलीनां मनसि चिरमेव विस्मयरसप्रस्रवण-धारावर्षं कुर्व्वाते ।

अयमपि नियतेर्नियोगात् काले कालवश्यतामुपजगाम । अस्यैव तृतीयस्तनयः सम्प्रति श्रीमान् प्रमदारञ्जनः काय-कान्तिनिर्ज्जितमदनस्वान्वर्थनामा विहारराजधान्यां कृत-वसतिर्वैकसीवंश-मुकुटमणिर्विनय--सौजन्य--तोषितजनमण्डलः, स्वदेशकल्याणायार्पितचित्तः, वित्तादिदानप्रीणितविद्वज्जनः, युवापि समुपार्ज्जितपरिणतवयःसमुचितविविधविज्ञानः, सौम्यः कर्म्मरसिको भव्यो हृदारुचिरचिरलब्ध-वीरेश्वर-विश्वेश्वर-सुतः सुखमास्ते । आशास्यते चास्माभिरयं पितृपितामहपदानुसारी सुचिरंजीवी भूयादिति । पश्यन्तु चास्य पितामहकृतिं सादरं सुधियः । अलमतिविस्तरेण ।

कोचविहार—
अग्रहायण—१३१८

श्रीकोकिलेश्वर भट्टाचार्य्य ।

# सूचीपत्रं ।

# आह्निकाचारतत्त्वावशिष्टम्।



श्रीगणेशपदाम्भोजं नत्वाभीष्टसुसिद्धये। तत्त्वावशिष्टकं वक्ष्ये संक्षेपात् सह पण्डितैः॥ यद्यपीह वन्द्यघटीयमहानुभवपण्डिताग्रगण्य-मान्य-निखिलशास्त्रार्थविचारचतुरचूडामणि-रघुनन्दन-भट्टाचार्य्य-विरचिताष्टाविंशतितत्त्वैर्नित्यनैमित्तिकादि-क्रियाकलापाः प्रायशो निष्पन्ना एव, तथापि प्रसिद्धत्वादिना तदीयोपेक्षितरहस्ययोर्यथासम्भवं किञ्चित् प्रकाशनाय तत्त-त्तत्त्वावशिष्टकरणेच्छया कतिपय-विद्वज्जन-सहायेन प्रवृत्तोऽस्मि अतः प्रागेव गुणग्राहि-परोपकारि समीचीनभूदेवगणेष्वसङ्ख्य-प्रणति-पुरःसरं ममैषा प्रार्थना भवद्भिरनुकम्प्यैतदारब्धे कर्म्मणि सफले सति तदवलोकनपूर्व्वकं विचारेणैव संशोधनीयम्। यद्येतदशेषतत्त्वावशिष्टकरणस्य बहुकाल-साध्यत्वेनायुषोऽनियत-तया निखिलतत्त्वावशिष्टकरणासम्भवस्तदैतत्तत्त्वावशिष्टावशिष्ट-करणे कात्स्न्येन मनोयोगिनो भवतेति निवेदनं ब्रह्म-कुलजन्मनः॥ तत्र प्रथममाह्निकाचारतत्त्वावशिष्टम्॥ अथाचारः॥ आगमे। न किञ्चित् कस्यचित् सिद्ध्येत् सदाचारं विना यतः। तस्मादवश्यं सर्व्वत्र सदाचारो ह्यपेक्ष्यते॥ मार्कण्डेय-पुराणे। यज्ञदान-

तपांसीह पुरुषस्य न भूतये। भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्त्तते। भविष्योत्तरे। आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः। विष्णुपुराणे। सदाचारवता पुंसा जितौ लोकावुभावपि। साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते॥ काशीखण्डे। अनध्ययनशीलञ्च सदाचारविलङ्घिनं। सालस्यञ्च दुरन्नादं ब्राह्मणं वाधतेऽन्तकः॥ ततोऽभ्यसेत् प्रयत्नेन सदाचारं सदा द्विजः। तीर्थान्यभिलसन्त्येव सदाचारसमागमं॥ भविष्योत्तरे। आचारप्रभवो धर्म्मः सन्तश्चाचारलक्षणाः। साधूनाञ्च यथा वृत्तं सदाचारः स उच्यते॥ तस्मात् कुर्य्यात् सदाचारं य इच्छेद्गतिमात्मनः। सर्व्वलक्षणहीनोऽपि स सदाचारवान्नृप॥ श्रद्दधानोऽनसूयश्च सर्व्वान् कामानवाप्नुयात्। आचार एव धर्म्मस्य मूलं राजन् कुलस्य च॥ आचाराद्विच्युतो जन्तुर्न कुलीनो न धार्म्मिकः। आचारो भूतिजनन आचारः कीर्त्तिवर्द्धनः। आचाराद्वर्द्धते ह्यायुराचारो हन्त्यलक्षणं॥ आचार एव नृपपुङ्गव सेव्यमानो, धर्म्मार्थकामफलदो भवतीह पुंसां। तस्मात् सदैव विदुषावहितेन राजन्, शास्त्रोदितो ह्यनुदिनं परिपालनीयः॥ मनुः। आचारः परमो धर्म्मः श्रुत्युक्तः स्मार्त्त एव च। तस्मादस्मिन् सदोद्युक्तो नित्यं स्यादात्मवान् द्विजः॥ अनाचारो हि पुरुषो लोके भवति निन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥ मार्कण्डेयपुराणे। गृहस्थेन सदा कार्य्यमाचारपरिपालनं। न ह्याचारविहीनस्य सुखमत्र परत्र च॥ विष्णुपुराणं। देवगोब्राह्मणाचार्य्यान् सिद्धान्

वृद्धांस्तथार्चयेत्। त्रिकालञ्चाचरेत् सन्ध्यामग्नीनुपचरेत्तथा॥ सदानुपहते वस्त्रे प्रशस्ताश्च तथौषधीः। शिताः सुमनसो हृद्या विभृयाच्च नरः सदा॥ मनुः। गारुत्मतानि रत्नानि विभृयात् प्रयतो नरः। स्रग्गन्धामलकेशश्च सुगन्धी चारुवेशधृक्॥ किञ्चित् परस्वं न हरेन्नाल्पमप्यप्रियं वदेत्। प्रियञ्च नानृतं ब्रूयान्नान्य-दोषानुदीरयेत्॥ सत्यं यत् परदुःखाय तत्र मौनपरो भवेत्। तस्मात् सत्यं वदेत् प्राज्ञो यत् परप्रीतिवर्द्धनं॥ धार्म्मे च। नव-नीतोपमा वाणी करुणा-कोमलं मनः। धर्म्मवीजप्रसूतानामेतत् प्रत्यक्षलक्षणं॥ दयादरिद्रं हृदयं मनः क्रकचकर्क्कशं। पाप-वीज-प्रसूतानामेतत् प्रत्यक्षलक्षणं॥ चतुष्पथं चैत्यतरुं श्मशानोपवनानि च। दुष्टस्त्रीसन्निकर्षञ्च वर्ज्जयेन्निशि सर्व्वदा॥ न कुर्व्वीत वृथा चेष्टां न वार्य्यञ्जलिना पिवेत्। नोत्सङ्गे भक्षये-द्भक्ष्यं नातितुष्येत् कुतूहली॥ नाक्षैः क्रीड़ेत् कदाचित्तु स्वयं नोपानहौ हरेत्। असत्प्रलापमनृतं वाक्पारुष्यञ्च वर्ज्जयेत्॥ दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिवेत्। सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत्॥ पराशरः। अरणिं कृष्णमार्ज्जारं चन्दनं सुमणिं घृतं। तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥ पुलस्त्यः। सर्पिर्लवणतैलादिक्षये चापि पतिव्रता। पतिं नास्तीति न ब्रूयादायासार्थेन योजयेत्॥ क्षयेपि घृतादिकं वर्द्धितमिति ब्रूयान्न तु नास्तीति। विष्णुसंहितायां। न कञ्च नावमन्येत न च हीनाङ्गानधिकाङ्गान् मूर्खान् धनहीनान् अवहसेत्। वयोऽनुरूपं वेशं कुर्य्यात् श्रुतस्याभिजनस्य धनस्य

देशस्य च सति विभवे न जीर्णमलवद्वासाः स्यान्न नास्तीत्यभि-भाषेत। न निर्गन्धोग्रगन्धिरक्तमाल्यं विभृयात् यष्टिञ्च वैणवीं विभृयात् कमण्डलुञ्च सोदकं कार्पासमुपवीतं रौक्मे च कुण्डले नादित्यमुद्यन्तमीक्षेत नास्तं यान्तं न वाससा तिरोहितं। न चादर्श-जलमध्यगतं न मध्याह्ने न क्रुद्धस्य गुरोर्मुखं न तैलोदकयोः स्वच्छायां न मलवत्यादर्शे न पत्नीं भोजनसमये। न स्त्रियं नग्नां न कञ्चन मेहमानं नामेध्यमग्नौ क्षिपेत् नासृक् न विषं अप्सु पि नाग्निं लङ्घयेत् न पादौ प्रतापयेत् न कांस्यभाजने चार्पयेत् वस्त्रोपानद्माल्ययज्ञोपवीतान्यन्यधृतानि न धारयेत् नोच्छिष्ट-हविषो शूद्राय दद्यात् न तिलान् न संहताभ्यां पाणिभ्यां शिर उदरञ्च कण्डूयेत न दधिसुमनसो प्रत्याचक्षीत नात्मनः स्रजमप-कर्षयेत् सुप्तं न प्रबोधयेत् म्लेच्छान्त्यजाबाभिभाषेत अग्निदेव-ब्राह्मणसन्निधौ प्रदक्षिणं पाणिमुद्धरेत् न परक्षेत्रे चरन्तीं गामा-चक्षीत न पिवन्तं वत्सकं नोद्धतान् प्रहर्षयेत् न नृत्यगीतं कुर्य्यात् नास्फोटनं न सर्पशस्त्रैः क्रीडेत अनिमित्ततः खानि खानि न स्पृशेत् लोकविरुद्धं धर्म्ममपि परिहरेत्॥ नोच्छिष्टहविषो इति आश्रितशूद्रेतरविषयं। उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पूलकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः॥ इति मनु-वचने प्रकृताश्रितशूद्राय भुक्तावशिष्टान्नदानस्य कुल्लूकभट्ट-प्रति-पाद्यत्वादिति एवञ्चात्र शूद्रपदस्याश्रित-शूद्रेतरपरत्वाद्धविषो-प्याश्रितशूद्रभिन्न एव दाननिषेधः। प्रदक्षिणं पाणिमुद्धरेदिति प्रदक्षिणं कृत्वा पाणिमुद्धरेत् नमेदित्यर्थः। नोद्धतान् उन्मत्तान्

खानि इन्द्रियाणि । विष्णुपुराणे । न कुर्य्याद्दन्तसङ्घर्षं न कृष्णीयाच्च नासिकां । केशास्थिकण्टकामेध्यवलिभस्म तुषांस्तथा । स्नानार्द्रां धरणीञ्चैव दूरतः परिवर्ज्जयेत् । पादेन नाक्रमेत् पादं न पूज्याभिमुखं नयेत् । श्लेष्मविण्मूत्ररक्तानि सर्व्वदैव न लङ्घयेत् ॥ बृहस्पतिः । पाणिभ्यां न स्पृशेच्चक्षुश्चक्षुषी नैकपाणिना । चक्षुः-परहिताकाङ्क्षी न स्पृशेदेकपाणिना ॥ बृहन्नारदीये । न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः । रजकस्य च यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति ॥ अत्रिः । शूर्पवात-नखाग्राम्बु-स्नानवस्त्र-घटोदकं । मार्ज्जनीरेणु-केशाम्बु हन्ति पुण्यं पुरा कृतं ॥ दिवा कपित्थ-च्छायायां रात्रौ दधिशमीषु च । कार्पासं दन्तकाष्ठञ्च विष्णोरपि हरेच्छ्रियं ॥ घटोदकमिति घटाद्बहिर्निःसृतमित्यर्थः । व्यव-हारोऽपि तथा ॥ विष्णुपुराणे । बालातपः प्रेतधूमो वृद्धा स्त्री तरुणं दधि । आयुष्कामो न सेवेत तथा सम्मार्ज्जनीरजः ॥ विवादञ्च न कुर्व्वीत नृपविप्रचिकित्सकैः । शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ॥ वृद्धा स्त्री निवृत्तरजस्का । विष्णुसंहितायां । असंस्तुतापि परपत्नी भगिनीति वाच्या मातेति पुत्रीति वा । मनुः । परपत्नी च या स्त्री स्यादसंबद्धापि योनितः । तां ब्रूया-द्भवतीत्येवं सुभगे भगिनीति च ॥ धौम्यः । वधूं पुत्रस्य भ्रातुश्च पुत्रीञ्च युवतीं ध्रुवं । अन्याश्च गुरुपत्नीश्च नेच्छेत् स्पर्शं न कारयेत् ॥ ताभिः सह कथालापं तथा निभृतदर्शनं । कलहं निस्त्रपां वाणीं सदैव परिवर्ज्जयेत् ॥ नग्नां परस्त्रियं नैव पश्येदात्मनः शकृत् ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु च न क्षिपेत् । उदक्यादर्शनं

स्पर्शं वर्ज्जयेद्घ्राणमपि तथा ॥ यस्य कस्य तु पुष्पेण पाण्डरेण विशेषतः । शिरसा धार्य्यमाणेन चालक्ष्मीस्तस्य हन्यते ॥ शिरसि धारणे निषिद्धपुष्पं । आचारादर्शे—उन्मत्तकं सिन्धुवारं कुन्दं तगरमेव च । द्रोणश्चार्कश्च पुष्पाणां शिरसा नैव धारयेत् ॥ सिन्धुवारं पलाशं । बृहन्नारदीये—भूदेवानां गुरो राज्ञः स्नातकाचार्य्ययोस्तथा । नाक्रमेत् कामतश्छायां चक्रिणो दीक्षितस्य च ॥ मार्कण्डेयपुराणं—युगपज्जलमग्निञ्च विभृयान्न विचक्षणः । आपस्तम्बः—न यमं यम इत्याहुरात्मैव यम उच्यते । आत्मा संयमितो येन तं यमः किं करिष्यति ॥ न तथाग्निस्तथा तीक्ष्णः सर्पो वा दूरधिष्ठितः । यथा क्रोधो हि जन्तूनां शरीरस्थो विनाशकः ॥ क्षमागुणो हि जन्तूनामिहामुत्र सुखप्रदः । एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ॥ यदेनं क्षमया युक्तमशक्तं मन्यते जनः । धार्म्मे—श्रावयेच्छृणुयाद्वापि सदाचारादिकं नरः । आचारादिफलं लब्ध्वा पापात् पूतो व्रजेद्दिवं ॥ अथ प्रातःकृत्यं । गणेशपुराणे—याममात्रावशिष्टायां निशायां जागृयात् पुमान् । त्यक्त्वा शय्यां शुचिस्थाने उपविश्य गुरुं स्मरेत् ॥ देवतां चिन्तयित्वेष्टां प्रणमेत् स्तुतिपूर्व्वकं । जगन्मये क्षमस्वेति प्रार्थ्य पृथ्वीं पदं न्यसेत् ॥ प्रातर्नमामि गणनाथमशेषहेतुं, ब्रह्मादिदेववरदं सकलागमाढ्यं । धर्म्मार्थकामफलदं जनमोक्षहेतुं, वाचामगोचरमनादिमनन्तरूपं ॥ प्रातर्नमामिगिरिजापतिमिन्दुमौलिं, व्याघ्राजिनावृतमुदस्तमयं मनोज्ञे । नारायणेन्द्रवरदं सुरसिद्धजुष्टं, सर्पान्त्रिशूलडमरूदधतं पुरारिं ॥ प्रातर्नमामि कमला-

पतिमुग्रवीर्य्य, नानावतारनिरतं निजरक्षणाय । क्षीराब्धिवास-ममराधिपबन्धुमीशं, पापापहं रिपुहरं भवमुक्तिहेतुं ॥ प्रातर्नमामि दीननाथमघापहारं, गाढ़ान्धकारहरमुत्तमलोकवन्द्यं । देवत्रयात्मकमुदस्तसुरारिमाद्यं, ज्ञानैकहेतुमुरुशक्तिमुदारभावं ॥ प्रातर्नमामि गिरिजां भवभूतिहेतुं, संसारसिन्धुपरपारकरीं त्रिनेत्रां । तत्त्वादिकारणमुदस्तसुरारिमायां, मायामयीं सुर-मुनीन्द्रनुतां सुरेशीं ॥ एवमन्यांश्च संस्मृत्य देवान् मुनिगणां-स्तथा । मानसैरुपचारैश्च पूजयित्वा क्षमापयेत् ॥ अथ हरि-भक्त्यादिग्रन्थोद्धृतवैष्णवप्रातःकृत्यं । प्रातः स्मरामि भवभीति-महार्त्तिशान्त्यै, नारायणं गरुड़वाहनमब्जनाभं । ग्राहाभिभूत-वरवारणमुक्तिहेतुं, चक्रायुधं तरुणवारिजपत्रनेत्रं ॥ प्रातर्नमामि मनसा वचसा च मूर्द्ध्ना, पादारविन्दयुगलं परमस्य पुंसः । नारायणस्य नरकार्णवतारणस्य, नारायणप्रणवविप्रपरायणस्य ॥ प्रातर्भजामि भजतामभयङ्करं तं, प्रागजन्मजन्मकृतपापभयापहत्यै । यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर, शोकप्रणाशमकरोद्धृतशङ्ख-चक्रः ॥ श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेत् यः । लोक-त्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ यदुत्सवादिकं कर्म्म तत्त्वया प्रेरितो हरे । करिष्यामि त्वदाज्ञयेमिति विज्ञापनं मम ॥ प्रातः प्रबोधितो विष्णो हृषीकेशेन यत्त्वया । यद्यत् कारयसीशान तत् करोमि तवाज्ञया ॥ त्रैलोक्यचैतन्यमयाधिदेव, श्रीकान्त विष्णो भवदाज्ञयैव । प्रातः समुत्थाय तव प्रियार्थं संसारयात्रा-मनुवर्त्तयिष्ये ॥ संसारयात्रामनुवर्त्तमानं त्वदाज्ञया श्रीनृहरे-

त्मरात्मन् । स्पर्द्धातिरस्कारकलिप्रमादभयानि मा नाभिभवन्तु भूमन् ॥ जानामि धर्म्मं न च मे प्रवृत्तिः, जानाम्यधर्म्मं न च मे निवृत्तिः । त्वया हृषीकेश हृदिस्थितेन, यथा नियुक्तोऽस्मि तथा करोमि ॥ जयति जलनिवासो देवकीजन्मवादो, यदुवरपरिषत्-स्वोजोभिरस्यन्नधर्म्मं । स्थिरचरवृजिनघ्न सुस्मितश्रीमुखेन, व्रज-पुरवनितानां वर्द्धयन् कामदेवं ॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषं तमजं नित्यं व्रजामि शरणं हरिं ॥ विदग्ध-गोपालविलासिनीनां, सम्भोगचिह्नाङ्कितसर्व्वगात्रं । पवित्र-माम्नायगिरामगम्यं ब्रह्म प्रपद्ये नवनीतचौरं ॥ उद्गायतीना-मरविन्दलोचनं, व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः । दध्नश्च निर्म्मन्थन-शब्दमिश्रितो, निरस्यते येन दिशाममङ्गलं ॥ पठेत् पुनश्च साधूनां सम्प्रदायानुसारतः । चतुःश्लोकीमिमां सर्व्वदोषशान्त्यै शुभाप्तये ॥

अथ प्रणाममन्त्राः । महाभारते । नमो ब्रह्मण्यदेवाय गो-ब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ गरुड़पुराणे । असुरविबुधसिद्धैर्ज्ञायते यस्य नान्तं, सकलमुनिभि-रन्तश्चिन्त्यते यो विशुद्धः । निखिलहृदि निविष्टो [illegible] य: सर्व्वसाक्षी, तमजममृतमीशं वासुदेवं नतोऽस्मि ॥ विष्णुपुराणे । यज्ञिभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तं ॥ एतेषां मन्त्राणां शक्ताशक्तभेदेन समु-च्चयविकल्पाभ्यामनुष्ठानं ॥ ततो वसुन्धरां प्रणम्य शय्यां त्यजेत् । वसुन्धराप्रणाममन्त्रो यथा विष्णुपुराणे । समुद्रमेखले देवि

पर्व्वतस्तनमण्डले। विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे॥
ततो रात्रिवासस्त्यक्त्वा शुद्धं वस्त्रं परिधाय पाणिपादप्रक्षालन-
दन्तधावनादिपूर्व्वकं शुद्धासने प्राङ्मुख उपविश्य गोपीचन्दने-
नोर्द्धपुण्ड्रं कृत्वाचमन-भूतशुद्धि-प्राणायामपुरःसरं गुरुं सञ्चिन्त्य
श्रीकृष्णं ध्यायेत्। तेषु प्रमाणं भविष्योत्तरे—ब्राह्मे मुहूर्त्ते
उत्थाय कृष्ण कृष्णेति कीर्त्तयन्। प्रक्षाल्य पाणिपादौ च दन्त-
धावनमाचरेत्। योऽपि तत्सम्भोगवस्त्रन्तु अन्यद्वाशुद्धिसंयुतं।
त्यक्त्वा शुद्धं पिधायाथ रात्रिशेषे वहिर्व्रजेत्। श्रीगोपीचन्दने-
नोर्द्धपुण्ड्रं कृत्वा यथाविधि। आसीत प्राङ्मुखो भूत्वा शुद्ध-
स्थाने शु ासने। सम्प्रदायानुसारेण भूतशुद्धिं विधाय च।
प्राणायामांश्च विधिवत् कृष्णं ध्यायेद्यथाविधि॥ अथ ध्यानं
तापनीश्रुतिषु यथा—सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं।
द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरं। गोपगोपीगवावीतं
सुरद्रुमलताश्रयं। दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगं।
कालिन्दीजलकल्लोलसङ्गिमारुतसेवितं। चिन्तयंश्चेति तं कृष्णं
मुक्तो भवति संसृतेः॥ स्कान्दे। आलोड्य सर्व्वशास्त्राणि विचार्य्य
च पुनः पुनः। इदमेव सुनिष्पन्नं ध्येयो नारायणः सदा॥
ततो देवालये गत्वा घण्टाद्युद्घोषपूर्व्वकं। प्रबोध्य स्तुतिभिः
कृष्णं नीराज्य प्रार्थयेदिदं। सोऽसावदभ्रकरुणो भगवान्
विबुद्धः प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन्। उत्थाय विश्व-
विजयाय च नो विषादं, माध्व्या गिरापनयतात् पुरुषः पुराणः।

देव प्रपन्नार्त्तिहर प्रसादं कुरु केशव । अवलोकनदानेन भूयो मां पावयाच्युत ॥ देवालयं प्रविश्याथ स्तोत्राणीष्टानि कीर्त्तयन् । कृष्णस्य तुलसीवर्ज्यं निर्म्माल्यमपसारयेत् ॥ अथ निर्म्माल्यो-त्तरणं । अत्रिस्मृतौ । प्रातःकाले सदा कुर्य्यान्निर्म्माल्योत्तरणं बुधः । तृषिताः पशवो वद्धाः कन्यकाश्च रजस्वलाः । देवता च सनिर्म्माल्या हन्ति पुण्यं पुराकृतं ॥ नारसिंहे । देवमाल्याप-नयनं देवागारे समूहनं । स्नापनं सर्व्वदेवानां गोप्रदानसमं स्मृतं ॥ नारद-पञ्चरात्रे ॥ यः प्रातरुत्थाय विधाय नित्यं, निर्म्माल्यमीशस्य निराकरोति । न तस्य दुःखं न दरिद्रता च, नाकालमृत्युर्न च रोगमात्रं ॥ अरुणोदयवेलायां निर्म्माल्यं शलदतां व्रजेत् । प्रातस्तु स्यान्महाशल्यं घटिकामात्रयोगतः । अतिशल्यं विजानीयात्ततो वज्रप्रहारवत् ॥ अथ श्रीमुखप्रक्षा-लनं । श्रीहस्ताङ्घ्रिमुखाम्भोजक्षालनाय च तद्गृहे । गण्डूषाणि जलैर्द्दत्वा दन्तकाष्ठं समर्पयेत् । जिह्वोल्लेखनिकां दत्त्वा पादुके शुद्धमृत्तिकां । सलिलञ्च पुनर्द्दद्याद्वासोऽपि मुखमार्जनं । ततः श्रीतुलसीं पुण्यामर्पयेद्भगवत्प्रियां ॥ अथ दन्तकाष्ठादिपञ्च-माहात्म्यं ॥ विष्णुधर्म्मोत्तरे । दन्तकाष्ठप्रदानेन दन्तसौभाग्य-मिच्छति । जिह्वोल्लेखनिकां दत्वा विरोगस्त्वभिजायते । पादुकायाः प्रदानेन गतिमिष्टाम वाप्नुयात् । मृद्भागदानाद्वस्य भूमिमाप्नोत्यनुत्तमां ॥ अथ मङ्गलनीराजनं । पठित्वाथ प्रियान् श्लोकान् महावादित्रनिःस्वनैः । प्रभोर्नीराजनं कुर्य्यान्मङ्गलाख्यं

जगद्धितं । नीराजनन्त्विदं सर्व्वैः कर्त्तव्यं शुचिविग्रहैः । परम-श्रद्धयोत्थाय द्रष्टव्यञ्च सदा नरैः । स्त्रीणां पुंसाञ्च सर्व्वेषामेतत् सर्व्वेष्टसाधनं । समस्तदीनदारिद्र्यदुरिताद्युपशान्तिकृत् ॥ इति वैष्णवप्रातःकृत्यं ॥ अथ तान्त्रिकप्रातःकृत्यं । यामले । ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेद्गुरुदेवतां । स्वमूर्द्ध्नि सहस्रारे शिवाख्ये परबिन्दुके । शशाङ्कायुतसङ्काशं वराभयलसत्करं । शुक्लाम्बरधरं श्रीमच्छुक्लमालयानुलेपनं । वामोरौ रक्तशक्त्या च युक्तं देवाख्य-मव्ययं । शिवेनैक्यं समानीय ध्यायेत् परगुरुं धिया । एवं ध्यात्वा पुनश्चैव पञ्चभूतमयैर्यजेत् । गन्धतत्त्वं पार्थिवन्तु कनिष्ठाङ्गुलियोगतः । शब्दमयं महापुष्पं प्रथमाङ्गुलियोगतः । वायुरूपं महाधूपं तर्जनीभ्यां नियोजयेत् । तेजोरूपं महादीपं मध्यमाद्वययोगतः । अमृतं भोजनं तद्वदमृताङ्गुलियोगतः । नमस्कारेणाञ्जलिना वाग्भवात्ताम्बूलं स्मृतं । स्वस्वमन्त्रेण सर्व्वन्तु नमस्कारेण योजयेत् । गुरोर्मन्त्रं प्रयत्नेन प्रजपेत् सुर-वन्दिते । वाणी च भुवनेशानी रमा चैव सुरेश्वरि । भावत्रय-मिदं प्रोक्तं गुरुमन्त्रप्रतिष्ठितं । ततः स्वगुरुनामान्ते आनन्दनाथ-मालिखेत् । रक्तशक्तिपदान्ते च अम्बापदमथालिखेत् । श्रीपादुकां समुच्चार्य्य पूजयामीति संजपेत् । तेजोरूपं समर्प्याथ स्तवेन तोषयेद्गुरुं । पूजयामीत्यनन्तरं पूजयेदिति शेषः । पूजयामीति नमस्कारेण योजयेदिति प्रागुक्तैर्नमोऽन्तेन पूजया-मीत्यनेन पूजयेदित्यर्थः । तत्क्रमः शाक्तानन्दतरङ्गिण्यां यथा—

ऐँ क्लीँ श्रीँ लँ पार्थिवात्मकेन महागन्धेन अमुकदेवशर्म्मानन्द-नाथरक्तशक्त्यम्बाश्रीपादुकां पूजयामि नमः इत्यनेन मन्त्रेण कनिष्ठाङ्गुलिद्वययोगमुद्रया निवेदयेत्। एवं सर्व्वत्र। ऐँ क्लीँ श्रीँ हँ आकाशात्मकेन महापुष्पेण अङ्गुष्ठद्वयमुद्रया। ऐँ क्लीँ श्रीँ यँ वायुरूपेण महाधूपेन तर्ज्जनीद्वयमुद्रया। ऐँ क्लीँ श्रीँ रँ तेजोमयेन महादीपेन मध्यमाङ्गुलिद्वयमुद्रया। ऐँ क्लीँ श्रीँ अमृतमयेन भोजनेन अनामिकाद्वयमुद्रया। ऐँ क्लीँ श्रीँ ऐँ आमोदात्मकेन ताम्बूलेन योन्यञ्जलिमुद्रया निवेदयेत्। संजपे-दिति वाग्भवमन्त्रमिति शेषः। तथा च श्यामारहस्ये। मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत्। स्तवेनेति स्तुतिर्यथा कुब्जिकातन्त्रे। नमस्तुभ्यं महामन्त्रदायिने शिवरूपिणे। ब्रह्म-ज्ञानप्रकाशाय घोरसंसारतारिणे। अतिसौम्याय दिव्याय वीराय दीनहारिणे। नमस्ते कुलनाथाय कुलकौलोन्यदायिने। शिव-तत्त्वप्रबोधाय ब्रह्मतत्त्वप्रकाशिने। नमस्ते गुरवे तुभ्यं दिव्य-भावप्रकाशिने। अनाचाराचारभाव-बोधाय भावहेतवे। भावा-भावविनिर्म्मुक्तमुक्तये गुरवे नमः। नमस्ते शम्भवे तुभ्यं साधका-भयदायिने। ज्ञानानन्दस्वरूपाय विभवाय नमो नमः। शिवाय शक्तिनाथाय विद्यानाथाय सच्चिदे। कामरूपाय कामाय काम-केलिकलात्मने। कुलपूजोपदेशाय कुलार्णवस्वरूपिणे। आरक्त-निजतच्छक्तिसमभागविभूतये। नमस्तेऽस्तु महेशाय नमस्तेऽस्तु नमो नमः। इदं स्तोत्रं पठेन्नित्यं साधको गुरुदिङ्मुखः।

प्रातरुत्थाय देवेशि ततो विद्या प्रसीदति॥ तदनन्तरं गुरुनमस्कारः। अखण्डमण्डलाकारं व्याप्तं येन चराचरं। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः। इत्येतन्मन्त्रद्वयमिति शाक्तानन्दतरङ्गिणी। नमोऽस्तु गुरवे तस्मा इष्टदेवस्वरूपिणे। यस्य वाक्यामृतं हन्ति विषं संसारसञ्ज्ञकमित्येष तृतीयो मन्त्र इति तन्त्रसारः। गुरुनमस्कारानन्तरं मूलादि-ब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेदित्यपि तन्त्रसारः। मूलविद्या-विभावने। ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गसंस्थितां श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकां। विश्वातीतां ज्ञानरूपां चिन्तयेदूर्द्ध्ववाहिनीमिति शाक्तानन्दतरङ्गिणी। तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेदित्यधिकं तन्त्रसारे। भावप्रदीपमते तु। देवीं हृत्कमले ध्यात्वा संपूज्य मानसैर्जपेत्। शतमष्टोत्तरं कृत्वा प्रातःकृत्ये नमेच्च तामिति। शाक्तानन्दतरङ्गिण्यां। अहं देवो न चान्योऽस्मि ब्रह्मैवास्मि न शोकभाक्। सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्॥ परदेव्या हृदिस्थेन प्रेरितेन करोम्यहं। न मे किञ्चित् कदाचिद्वा कृत्यमस्ति जगत्त्रये॥ जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन, यथा नियुक्तोऽस्मि तथा करोमि॥ त्रैलोक्यचैतन्यमये सुरेशि, श्रीपार्वति त्वच्चरणाज्ञयैव। प्रातः समुत्थाय तव प्रियार्थं, संसारयात्रामनु-

वर्त्तयिष्ये॥ एवं सञ्चिन्त्य मनसा गृहान्निर्गत्य संयतः। प्रणम्य पृथिवीं वामचरणं तत्र विन्यसेत्। महानिर्व्वाणतन्त्रे। नमस्कृत्य वहिर्गच्छेद्वामपादपुरःसरं। त्यक्त्वा मूत्रपुरीषञ्च दन्तधावनमाचरेत्॥ इति तान्त्रिकप्रातःकृत्यं समाप्तं॥ अकरणे दोषमाह यामले। प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्च्चयेत्। तस्य पूजा च विफला शौचहीना यथा क्रिया॥ तारारहस्ये। प्रातःकृत्यं विना देवि न सिद्धिर्जायते शिवे। न पूजाफलमाप्नोति मन्त्रजापस्य निश्चितं। सर्व्वा क्रिया निष्फला स्याद्वैदिकी तान्त्रिकी तथा। प्रातःकृत्यविहीनस्य शौचहीना क्रिया यथा॥ अथ विण्मूत्रोत्सर्गः। तत्र काशीखण्डे। ततश्चावश्यकं कर्त्तुं नैर्ऋतीं दिशमाश्रयेत्। ग्रामाद्धनुशतं गच्छेन्नगराच्च चतुर्गुणं। धनुर्हस्तचतुष्टयं। द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयन्तु शरः स्मृतः। तच्चतुर्थं धनुः प्रोक्तं क्रोशो धनुः सहस्रिकः। इति विष्णुधर्म्मोत्तरीयप्रथमकाण्डात्। बृहन्नारदीये। शिरः प्रावृत्य वस्त्रेण अन्तर्धाय तृणैर्महीं। वहन् काष्ठं करेणैकं तावन्मौनी भवेद्द्विजः॥ कौर्म्मे। निधाय दक्षिणे कर्णे यज्ञसूत्रमुदङ्मुखः। अन्तर्द्धाय महीं काष्ठैः पत्रैर्लोष्ट्रैस्तृणेन वा। दिनभास्करधृतवायुपुराणे। शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा। मृण्मयैर्भाजनैर्वापि तिरोधाय वसुन्धरां। अत्र तृणकाष्ठपदं अयज्ञीयपरं। तृणमयाज्ञिकं काष्ठञ्चेत्यापस्तम्बीयात्। अयाज्ञिकैरनार्द्रैश्च तृणैः संछाद्य मेदिनीमिति यमोक्तेश्च। विष्णुपुराणे।

दूरादावसथान्मूत्रं पुरीषञ्च समुत्सृजेत्। पादावसेचनोच्छिष्टे प्रक्षिपेन्न गृहाङ्गने। आत्मच्छायां तरुच्छायां गोसूर्य्याग्न्यनिलांस्तथा। गुरु द्विजातिश्च बुधो न मेहेत कदाचन॥ कौर्म्मे। न चैवाभिमुखः स्त्रीणां गुरुब्राह्मणयोर्गवां। न देवदेवालययोर्नारामेऽपि कदाचन॥ अत्रिः। तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रे कुरुते द्विजः। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ काशीखण्डे। नालोकयेद्दिशो भागान् ज्योतिश्चक्रं नभो मलं। वामेन पाणिना शिश्नं धृत्वोत्तिष्ठेत् प्रयत्नवान्॥ वृहन्नारदीयेऽपि। गृहीतशिश्न उत्थाय शौचार्थं मृदमाहरेत्॥ अथ शौचं। विष्णुपुराणं। अष्टाङ्गुलं खनित्वा तु समुद्धृत्य मृदं ततः। एवं हि मृत्तिका ग्राह्या चान्यथा विफलं भवेत्। शुक्ला रक्ता तथा पीता कृष्णा चैव हि मृत्तिका। वर्णानामानुपूर्व्वेण शौचार्थं काश्यपोऽब्रवीत्। हस्तादिशौचार्थं मृत्परिमाणमाह—काशीखण्डे। आर्द्रधात्रीफलोन्माना मृदः शौचे प्रकीर्त्तिताः। मनुः। एका लिङ्गे गुदे तिस्रो दश वामकरे तथा। उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता। एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणां। त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणं। वामहस्ते दश दानानन्तरं तत्पृष्ठे षड्दानमाह हारीतः। दश मध्ये च षट् पृष्ठे इति। शङ्खदत्तौ। तिस्रस्तु मृत्तिका देया कृत्वा नखविशोधनं। तिस्रस्तु पादयोर्देयाः शुद्धिकामेन नित्यशः। नखशोधनं तृणादिना नखान्तर्मलशोधनं। तिस्र इति हस्तयोरिति

शेष:। वृहन्नारदीये। व्रतस्थानाञ्च सर्व्वेषां यतिवच्छौचमिष्यते। विधवानाञ्च विप्रेन्द्रा एवं शौचं विधीयते॥ मदनपारिजातधृत-पराशर:। उपविश्य तु विण्मूत्रं कर्त्तुं यो न करिष्यति। स कुर्य्यादर्द्धशौचन्तु स्वस्य शौचस्य सिद्धये। शौचे यत्न: सदा कार्य्य: शौचमूलो द्विज: स्मृत:। शौचाचारविहीनस्य समस्तं कर्म्म निष्फलं॥ मूत्रशौचविषये तद्धृतशातातप:। एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयो:। मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत्॥ अथ दन्तधावनं। श्रुतिरत्नाकरधृत-पारस्कर:। औडुम्बरेण दन्तान् धावयेत्। स्मृति:। क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभं। अपामार्गञ्च विल्वं वा करवीरं विशेषत:। अष्टाङ्गुलं वितस्तिर्व्वा सत्वक् काष्ठं सुशोभनं। मौनेनैव प्रयत्नेन प्रकुर्य्याद्दन्तधावनं। काशीखण्डे। आम्राम्रातक-धात्रीणामङ्कोठ-खदिरोद्भवं। शम्यपामार्गखर्ज्जूरीशेलुश्रीपर्णीपीलुजं। राजा-दनञ्च नारङ्ग कषायकटुकण्टकं॥ अथ दन्तधावने निषि-द्धानि॥ स्मृति:॥ पलाशानां दन्तकाष्ठं पादुके चैव [illegible]र्जयेत्। वर्जयेच्च प्रयत्नेन वटञ्चाश्वत्थमेव च॥ महाभारते। सार्द्रं सपत्रकं जातमूर्द्ध शुष्कञ्च पाटितं। दुग्धहीनं यन्योयुतं त्यजेत् पालाशशैशपं। पालाशञ्च कुशं काशं भक्षयेद्यदि शिंशपां। तावद्भवति चाण्डालो यावद्गां नैव पश्यति॥ सार्द्रं कोमलं पाटितमुत्पाटितमित्यर्थ:। मनु:। चतुर्द्दश्यष्टमी दर्शपौर्णमास्यर्कसंक्रम:। एषु स्त्रीतैलमांसानि दन्तकाष्ठानि

वर्जयेत्॥ सम्बर्त्तः। आद्ये तिथौ नवम्याञ्च क्षये चन्द्रमसस्तथा। आदित्यवारे शौरे च वर्जयेद्दन्तधावनं। वृद्धवशिष्ठः। उपवासे तथा श्राद्धे न खादेद्दन्तधावनं। दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वै॥ प्रतिपद्दर्शषष्ठो च नवम्येकादशी रवौ। दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥ पैठीनसिः॥ काष्ठैः प्रतिपदादौ यन्निषिद्धं दन्तधावनं। तृणपर्णैस्तु तत् कुर्य्यादमामैकादशीं विना। अलाभे वा निषेधे वा काष्ठानां दन्तधावनं। पर्णादिना विशुद्धेन जिह्वोल्लेखः सदैव हि। वैद्यशास्त्रे॥ जिह्वानिर्लेखनं रौप्यं सौवर्णं ताम्रमायसं। तन्मलापहरं शस्तं मृदु सूक्ष्मं दशाङ्गुलं। विहन्ति वक्तवैरस्यं जिह्वादन्ताश्रितं मलं॥ क्रियायोगसारे। प्रभाते मार्जयेद्दन्तान् वाससा रसनान्तथा। कुर्य्याद्द्वादश विप्रेन्द्र कवलानि जलैर्बुधः। मध्यमानामिकाभ्याञ्च वृद्धाङ्गुष्ठेन च द्विजः। दन्तानां धावनं कुर्य्यात्तर्ज्जन्या न कदाचन॥ अत्र धावनपदं मार्ज्जनपरं॥ गणेशपुराणे। तत आचम्य काष्ठन्तु क्षीरिकण्टकवृक्षयोः। गृहीत्वा प्रार्थनापूर्व्वं दन्तजिह्वां विशोधयेत्। ओं बलमोजो यशस्तेजः पशुबुद्धिधनानि च। मेधां ब्रह्मधियञ्चैव त्वं मे देहि वनस्पते॥ दन्तधावने ब्राह्मणसर्व्वस्वधृतवैदिकमन्त्रः॥ अन्नाद्याय व्यूहध्वंसोमो राजायमागमत्। स मे मुखं प्रमार्ज्जतु यशसा च भगेन च। तान्त्रिकमन्त्रस्तु। ओं क्लीं कामदेव सर्व्वजनप्रियाय नमः॥ प्रमाणं दक्षिणामूर्त्तौ। ओमात्मकं कामदेव सर्व्वजनमथालिखेत्। प्रियाय हृदयान्तोऽयं

मनुर्दन्तविशुद्धये॥ तदकरणे दोषमाह—वराहपुराणं। दन्तकाष्ठमखादित्वा यस्तु मामुपसर्पति। सर्व्वकालकृतं कर्म्म तेन चैकेन नश्यति॥ इति॥ मां विष्णुं। अथ केशप्रसाधनं॥ *॥ रामार्च्चनचन्द्रिकायां॥ ततश्चाचम्य विधिवत् कुर्य्यात् केशप्रसाधनं। प्राङ्मुखोदङ्मुखो वापि प्रशस्तं केशशोधनं। स्नात्वा प्रसाधयेन्नैव भुक्त्वा निशि विशेषतः। सन्ध्ययोश्चैव तीर्थे च मह्रागुरु-मृते तथा॥ वायुपुराणे। दक्षिणाभिमुखो यस्तु पश्चिमाभिमुखोऽपि वा। केशान् प्रसाधयेद्विप्रः कुर्य्याद्वा दन्तधावनं। निराशाः पितरो यान्ति शापं दत्वा सुदारुणं॥ अथ प्रातःस्नानं॥*॥ काशीखण्डे। प्रातःस्नानाद्यतः शुद्धेत् कायोऽयं मलिनः सदा। छिद्रिते नवभिश्छिद्रैः स्रवत्येव दिवानिशं। उत्साहमेधासौभाग्यरूपसम्पत्प्रवर्त्तकं। मनःप्रसन्नताहेतुः प्रातःस्नानं प्रशस्यते। प्रातः प्रातस्तु यत् स्नानं संयाते चारुणोदये। प्राजापत्यसमं प्राहुस्तन्महाघविघातकृत्। प्रातःस्नानं हरेत् पापमलक्ष्मीं ग्लानिमेव च। अशुचित्वञ्च [illegible] तुष्टिं पुष्टिं प्रयच्छति। नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क्वचित्। दृष्टादृष्टफलं तस्मात् प्रातःस्नानं समाचरेत्॥ कौर्म्मे॥ प्रातःस्नानं विना पुंसां पावित्र्यं कर्म्मसु स्थितं। होमे जपे विशेषेण तस्मात् स्नानं समाचरेत्॥ मार्कण्डेयपुराणे। अस्नातस्य क्रियाः सर्व्वा भवन्ति विफला यतः। प्रातः समाचरेत् स्नानं तच्च नित्यमिति स्मृतं॥ छन्दोगपरिशिष्टं॥ प्रातःस्नानं गृहेऽपि स्यात् सन्निकृष्टजलेऽपि वा। दूरं न गच्छेत् सन्ध्यायां

व्यालव्याघ्रादिशङ्कया। यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः॥ विष्णुः। प्रातःस्नानं ततः सन्ध्या तदैव न ततः परं। प्रातःस्नानं मन्त्रवर्ज्यं मध्याह्ने साङ्गको विधिः॥ मन्त्रवर्ज्यमिति प्रातःस्नाने सर्व्वात्मना न मन्त्रनिषेधः अपितु मन्त्रबाहुल्यनिषेधः। तथा च कात्यायनः। अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः। प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः। न तनुयाद्विस्तरविधिना न कुर्य्यादित्यर्थः। अतएव निरग्निकैः समग्रविधिना स्नानं कर्त्तव्यमित्यग्निहोत्राभावादिति श्रुति-रत्नाकरः॥ * ॥ अथ संक्षिप्तस्नानं॥ योगियाज्ञवल्क्यः। योऽसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः। असामर्थ्यात् न कुर्य्याच्चेत्तत्रायं विधिरुच्यते। स्नानमन्तर्जले चैव मार्जनाचमने तथा। जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनं। अघमर्षणसूक्तेन त्रिरावृत्तेन मज्जनं। स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः॥ तत्राप्यशक्तौ व्यासः॥ अन्तर्जले ऋतं सत्यं जपेत्त्रिरघमर्षणं॥ एतत् स्नानान्तरमिति श्रुतिरत्नाकरः॥ वानप्रस्थादिस्नाने दक्षः। प्रातर्म्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः। यतेस्त्रिसवनं स्नानं सकृत्तु ब्रह्मचारिणः। ब्रह्मचारिणः सकृत्-स्नानमशक्तविषयं। स्नायात् प्रातश्च मध्याह्ने ब्रह्मचारी तथा गृहीति स्मृतिसंग्रहवचने स्नानद्वयस्यापि विहितत्वात्॥ अथ प्रातःसन्ध्याकालः॥ * ॥ तत्र विष्णुः। दण्डैकं रात्रिशेषन्तु प्रथमं दिवसस्य तु। एवं दण्डद्वयं सन्ध्या पूर्व्वं पुण्यतरं स्मृतमित्यनेनापरदण्डस्य किं गौणकालपरत्वमुतस्वि-

ह्रोष्ठतयुक्तं वा विप्रपादरजोऽन्वितं। भानौ पूर्व्वान्वितं भौमि भूयुक्तं पुष्पगुग्गुलू। सर्व्वेषां सर्व्वदा तैलमभ्यङ्गेषु न दूष्यति। रात्रिर्हरिद्रा। कात्यायनः। माङ्गल्यं विद्यते स्नानं वृद्धि-पूर्त्तोत्सवादिषु। स्नेहमात्र-समायुक्तं मध्याह्नात् प्राक् तदिष्यते। व्यासः। येन केनचिदभ्यक्तस्तैलेन च घृतेन वा। तावत् स्यादशुचिर्व्विप्रो यावन्निर्णीयते न तत्। यज्ञसूत्रं कटौ धृत्वा तैलाभ्यङ्गं करोति यः। नाश्नन्ति पितरस्तस्य वर्षाणि दश पञ्च च। न नि[illegible]र्यते वस्त्रादिना न परिमार्ज्यते। तिलो-द्वर्त्तननिषेधे षट्त्रिंशन्मतं। तथा सप्तम्यमावस्यासंक्रान्ति-ग्रहजन्मसु। धनपुत्रकलत्रार्थी तिलपिष्टं न संस्पृशेत्॥*॥ अथ जलप्रशंसा आचारादर्शे। गोविन्दो द्रवभावेन जलरूपेण तिष्ठति। जलस्य सदृशं पूतं न भूतं न भविष्यति। शिवलिङ्ग-समीपस्थं यत्तोयं पुरतः स्थितं। शिवगङ्गेति सा प्रोक्ता तस्यां स्नात्वा दिवं व्रजेत्॥ अथ स्नाने विहितजलं तत्रैव॥ नदीषु देवखातेषु तड़ागेषु सरःसु च। स्नानं समाचरेन्नित्यं ग[illegible]स्र-वणेषु च। विष्णुपुराणं। नदीह्रदतड़ागेषु देवखातजलेषु च। नित्यक्रियार्थं स्नायीत गिरिप्रस्रवणेषु च। कूपेषूद्धत-तोयेन स्नानं कुर्व्वीत वा भुवि। नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणं। तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः। शङ्खः। स्नातस्य वह्नितप्तेन तथैव परवारिणा। कायशुद्धिं विजा-नीयान्न तु स्नानफलं लभेत्। बृहन्मनुः। पौर्णमास्यां तथा दर्शे यः स्नायादुष्णवारिणा। स गोहत्याकृतं पापं प्राप्नोतीह

न संशयः॥ अथ स्नाने निषिद्धजलं तत्रैव। प्रभूते विद्यमानेऽपि विमले सुमनोहरे। नाल्पोदके द्विजः स्नायात् नदीश्चोत्सृज्य कृत्रिमे। पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिषु। निषिद्धेषु च मृत्पिण्डान् कूपेषु त्रीन् घटांस्तथा। निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते। निरुद्धासु च न स्नायादंशभाक् सेतुकृद्भवेत्। अन्तर्द्वीपे च न स्नायान्न तां तीर्त्वा जलान्तरे। न मेहेत नदीद्रोण्यां स्नात्वा न च नदीं तरेत्। प्रत्याहृत्ताम्भसि स्नानं वर्ज्यं नद्यां विशेषतः। तस्यां रजकतीर्थे च दशहस्ते न चोपरि। उपरि समीपे रजकतीर्थस्य दशहस्ताभ्यन्तरे न स्नायादित्यर्थः॥ अथ नैमित्तिकस्नानं॥ तत्र ब्रह्मपुराणं॥ श्मश्रुकर्म्मास्रुपातश्च मैथुनं छर्द्दनं तथा। अस्पृश्यस्पर्शनं कृत्वा स्नायादूर्ज्या जलक्रिया॥ मैथुनं ऋत्वभिगमनं तथापि गर्भस्थितिशङ्कया स्नानमिति वक्ष्यते। छर्द्दनं वमनं। अस्पृश्यस्पर्शनं चाण्डालादिस्पर्शनं। स्नायाज्जलावगाहनं कुर्य्यान्न तु तीर्थावाहनादि तर्पणान्तां जलक्रियां कुर्य्यादित्यर्थः। व्यक्तमाह्निकाचारादर्शे। अस्पृश्यस्पर्शने वान्ते चास्रुपाते क्षुरे भगे। स्नानं नैमित्तिकं कार्य्यं दैवपैत्रविवर्जितं॥ * ॥ अथ क्षतादौ कर्म्मनिषेधः॥ * ॥ यमः। दन्तरक्तं यदा यातमत्यन्तमशुचिर्भवेत्। नित्यनैमित्तिकं कर्म्म न कुर्य्यात् तद्दिने द्विजः। जानूर्द्ध्वं क्षतजे जाते नित्यं कर्म्म न चाचरेत्। नैमित्तिकञ्च तदधःस्रवद्रक्तो न चाचरेत्। स्मृतिरत्नाकरधृत-यमः। गलक्षणे च क्षतजे सूत्रोच्चाराविवर्ज्जने।

आह्निकं कर्म्म कुर्व्वाणो नरकं प्रतिपद्यते । पैत्रं कर्म्म न कुर्व्वीत नाभेरूर्द्ध्वं गलद्व्रणः । दैवं कर्म्म न कुर्व्वीत यदि हस्तव्रणो भवेत् इति यमवचने नाभेरूर्द्ध्वमिति श्रवणात् जानूर्द्ध्व-क्षतजे नित्यनैमित्तिकनिषेधकवचने जानूर्द्ध्वं पदं नाभ्यूर्द्ध्व-परं । नाभेरधस्तु गलति दृश्यमानोऽपि शङ्कितः । नित्यं नैमित्तिकं कुर्य्यान्नतु दोषं कदाचनेति वचनात् । जलौकाः किंजलौकाश्च सर्पमण्डूकभूलताः । एषाञ्चापि करस्पर्शं नित्यनैमित्तिकं त्यजेत् । ऊर्द्ध्वाङ्गे चापि संस्पृष्टे नित्यकार्य्ये च दूषणं । अधोऽङ्गे चापि संस्पृष्टे काम्य-नैमित्तिकं तथा । उच्छिष्ट-स्पर्शने वान्ते अश्रुपाते च मैथुने । सुरायाश्चापि संस्पर्शे नित्यनैमित्तिकं त्यजेत् । अन्त्यावशायिनां स्पर्शे क्रव्यादपशुपक्षिणां । अमेध्यप्रभवाणाञ्च नित्यनैमित्तिकं त्यजेत् । एतत्तु जलौकादीनां कामतः स्पर्श बोध्यमिति कश्चित् । वयन्तु जलौकास्पर्शादौ स्नानात् पूर्व्वं नित्यनैमित्तिक-कर्म्मानधिकार इति प्रतीमः । प्रागुक्त-ब्रह्मपुराणेऽश्रुपातादौ स्नानवि[illegible]ात् जलौकादिस्पर्शादिनिषेधनं गङ्गादितीर्थादीतरविषयमिति रत्नाकरः । अत्र तु जातके मृतके वापि सन्ध्यास्नानं न सन्त्य-जेत् । मनसैवोच्चरेन्मन्त्रान् प्राणायाम-विवर्ज्जनमिति, सन्ध्या-स्नानं त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् । तस्मात् स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेदिति यमवचन-मदनपारिजात-धृतयोगीश्वर-वचनाभ्यां स्नानसन्ध्या-त्यागनिषेधात् तत्त्यागे दोषातिशयप्रकाशनाच्च । क्षताशौचे नित्यकर्म्मवर्ज्जनं स्नान-

सन्ध्येतरपरं। अतएव सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवे-ष्यते इति विष्णुपुराणवचने सन्ध्यापदं स्नानोपलक्षणं। ननु स्नानसन्ध्याकरणस्य क्षताशौचेऽपि सूतकवत् मानसिकत्वं कुतो न स्यात्. सैवं प्रागुक्तयमवचने योगीश्वर-वचने च जनन-मरणाशौच एव मानसिकस्नानसन्ध्याविधानात्, अन्यथा तद्वचने जातकसूतकपदोपादानं व्यर्थं स्यात्। न च सर्व्वकाल-मुपस्थानमिति विष्णुपुराणवचनप्रतिप्रसवात् जननमरणा-शौचेऽपि स्नानसन्ध्यागोमन्त्रोच्चारणपूर्व्वकं कर्त्तव्यत्वमिति वाच्यं. तत्र मानसिकस्नानसन्ध्याविधानेन प्रतिप्रसवास्पर्शात् सर्व्वदेशीयाचार-विरोधाच्च॥ अथ स्नानं॥ दक्षः। प्रातर्म्मध्या-ह्नयोः स्नानं वानप्रस्थगृहस्थयोः। आचारादर्शे। नित्यं नैमि-त्तिकं काम्यं त्रिविधं स्नानमिष्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितं। नद्यां स्रोतोमुखं कार्य्यं स्नानं पापापनुत्तये। स्थावरेषु च सर्व्वेषु स्नायाद्भास्करसम्मुखः। पाद्मे। स्नानं विना तु यो भुङ्क्ते मलाशी स सदा नरः। अस्नायिनोऽशुचेस्तस्य-विमुखाः पितृदेवताः। स्नानहीनो नरः पापी स्नान-हीनोऽशुचिः सदा। अस्नायी नरकं भुङ्क्ते पुक्कशादिषु जायते। उद्योगपर्व्वणि। गुणा दश स्नानशीलं भजन्ते, बलं रूपं स्वरवर्णप्रसिद्धिः। स्पर्शश्च गन्धश्च विशुद्धता च, श्रीः सौकुमार्य्यं प्रवराश्च नार्य्यः॥ पाद्मे। याम्यं हि यातनादुःखं नित्य-स्नायी न पश्यति। नित्यस्नानेन पूयन्ते अपि पापकृतो नराः। योगियाज्ञवल्क्यः। स्नानमूलाः क्रियाः सर्व्वाः श्रुतिस्मृत्यु-

दिता नृणां। तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्द्धनं। देवलः। अगम्यागमनात् स्तेयात् पापिभ्यश्च प्रतिग्रहात्। रहस्याचरितात् पापान्मुच्यते स्नानमाचरन्। स्नानार्थमुपगच्छन्तं देवताः पितृभिः सह। नरमासाद्य गच्छन्ति तृषार्त्ताः सलिलार्थिनः। तस्मान्मौनेन गन्तव्यं स्नातुं वै जानता सदा। अस्नात्वा न निवर्त्तव्यं स्वगृहं प्रति भारत। क्रियायोगसारे। अकृत्वा स्नानकर्म्माणि गृहमायाति यः पुमान्। तस्मिन्दिने पितृगणस्तस्य नाप्नोति तर्पणं। स्नानार्थं सरसीं गत्वा मलमूत्रे करोति यः। पितरस्तन्मलं मूत्रं भोजिनः स्युर्न संशयः। मूत्रभोजिन इत्यार्षप्रयोगः। यद्वा भुञ्जाना इत्येव पाठः कर्म्मणि षष्ठीप्राप्तेर्दनिवारत्वात्। आचारादर्शे। तीरे तीर्थस्य सम्प्राप्ते विण्मूत्रं न समाचरेत्। विंशद्धस्तान्तरे कुर्य्यादान्नुड्डातुरैर्व्विना। शातातपः। नापमृज्यात्ततः स्नातो गात्राण्यम्बरपाणिभिः। न वा विधूनयेत् केशान् न वाससी विधूनयेत्। नापमृज्यादिति गोदोहमात्रं तिष्ठेत् तथैव शिष्टाचारादिति मदनपारिजातः। तत्र देवलः। तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानुषे। स्रवन्ति सर्व्वतीर्थानि तस्मात्तानि न मार्ज्जयेत्। देवाः पिबन्ति शिरसः पितरो मुखतस्तथा। गन्धर्व्वा राक्षसाश्चैव अधमः सर्व्वजन्तवः॥ * ॥

अथ यज्ञोपवीत-मार्जनं॥ * ॥ गायत्रीतन्त्रे॥ मार्जयेद्दधिदुग्धेन घृतेन बहुयत्नतः। घृताद्यभावे चार्व्वङ्गि मार्ज्जयेत् पिष्टतण्डुलैः। तदभावे सार्षपेण तिलतैलं परित्यजेत्।

विल्वस्य फलनिर्य्यासैर्म्मार्ज्जयेत् द्विजसत्तमः। शुद्धसत्वात्मकं सूत्रं तदा भवति प्रत्यहं। शुद्धसत्वात्मकं सूत्रं ब्राह्मणेषु प्रशस्यते। लोहितं क्षत्रिये शस्तं वैश्ये पीतं प्रशस्यते। वामस्कन्धात् समुत्तार्य्य वामाङ्गुष्ठे नियोजयेत्। वामाङ्गुष्ठं वामस्कन्ध-मेकमेव न चान्यथा। वामाङ्गुष्ठयुतं सूत्रं कृत्वा सम्मार्ज्ज-येत् द्विजः। कण्ठे शिरे दक्षकरे धृत्वा शूद्रत्वमर्हति। गायत्र्या अयुतं जप्ता तस्मात् पापात् प्रमुच्यते। वर्णविप्रे तथा भट्टे मार्जनारहितं सदा। धारणं यज्ञसूत्रस्य जातिभेदे पृथक् पृथक्। रक्तचन्दनतोयेन मार्जयेत् नृपजातयः। हारिद्रैर्म्मार्ज्जयेद्वैश्य इति शास्त्रस्य निर्णयः॥ अथ तत्परिवर्त्तनकालः॥ काश्यपः॥ साईमासे यज्ञसूत्रं गृहीत्वा पूर्व्वकालिनं। तत्रास्तं येन तस्यायुर्द्विजवर्य्यस्य वर्द्धते॥ अथ स्नानेतिकर्त्तव्यता॥ षट्त्रिंशन्मतं॥ मलस्नानं तटे कृत्वा मज्जेदप्सु यथाविधि। वामनपुराणं। नाभिमात्र-जले गत्वा कृत्वा केशान् द्विधा द्विजः। निरुध्य कर्णौ नासाञ्च विकृत्वो मज्जनन्ततः। मदनपारिजाते शङ्खः। क्रियास्नानं प्रवक्ष्यामि यथा च विधिपूर्व्वकं। मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि। जले निमग्न उन्मज्य उपस्पृश्य यथाविधि। तीर्थस्यावाहनं कुर्य्यात्तत् प्रवक्ष्याम्यतःपरं॥ प्रपद्ये वरुणं देवमम्भसां पतिमूर्ज्जितं। याचितं देहि मे तीर्थं सर्व्व-पापापनुत्तये। सान्निध्यमस्मिंस्तोयेऽस्तु स्थीयतां मदनुग्रहात्। रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुषदोन्वहं। सर्व्वानप्सुषद-

श्चैव प्रपद्ये प्रणतः स्थितः। देवमप्सुषदं वह्निं प्रपद्येऽघनि-सूदनं। आपः पुण्याः पवित्राश्च प्रपद्ये पावनं तथा। रुद्राश्चाग्निश्च सर्पाश्च वरुणश्चाप एव च। शमयन्त्वाशु मे पापं रक्षन्तु च सदाप्सु मां। इत्येवमुक्त्वा कर्त्तव्यं ततः सम्मार्ज्जनं कुशैः। आपोहिष्ठेति तिसृभिर्यथावदनुपूर्व्वशः। हिरण्यवर्णा इति च ऋग्भिश्चतसृभिस्तथा। शन्नोदेवीरिति तथा शन्नआपस्तथैव च। इदमापः प्रवहतेत्येवं सर्व्वमुदीरयेत्। एवं सम्मार्ज्जनं कृत्वा तदा आर्षञ्च दैवतं। अघमर्षणसूक्तस्य संस्मरेत् प्रयतः सदा। ततोऽम्भसि निमग्नस्तु त्रिः पठेदघमर्षणं। आद्यान्मूर्द्धनि तथा महाव्याहृतिभिर्ज्जलं॥ इति क्रियास्नानं॥ ॥ अथ क्रियास्नानप्रयोगः॥ मृद्भिः शौचं विधाय जलं प्रविशेत् ततो मज्जनं कृत्वाचामेत् तीर्थावाहनं कुर्य्यादनेन। ओँ प्रपद्ये वरुणन्देवमम्भसां पति-मूर्ज्जितं। याचितं देहि मे तीर्थं सर्व्वपापापनुत्तये। सान्निध्य-मस्मिंस्तोयेऽस्तु स्थीयतां मदनुग्रहात्। ओँ रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुषदोन्वहं। सर्व्वानप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः। देवमप्सुषदं वह्निं प्रपद्येऽघनिसूदनं। आपः पुण्याः पवित्राश्च प्रपद्ये पावनन्तथा। ओँ रुद्राश्चाग्निश्च सर्पाश्च वरुणश्चाप एव च। शमयन्त्वाशु मे पापं रक्षन्तु च सदात्र मां। ततः कुशैः सम्मार्जनं कुर्य्याद् यथा। ओँ आपोहिष्ठामयोभुव-स्तान ऊर्ज्जेदधातनमहेरणाय चक्षसे। ओँ योवःशिवतमोर-सस्तस्य भाजयतेह नः। उशतीरिव मातरः ओँ तस्मा अरङ्गमाम-

वो यस्य क्षयाय जिन्वथ आपोजनयथाचनः । ओँ हिरण्यवर्णाः शुचयः पावकाः यासु यातः काश्यपोजोत्विन्द्रः याअग्निं गर्भं दधिरे सुवर्णास्तान् आपः शंस्योनाभवन्तु । १ । ओँ यासां राजावरुणो याति मध्ये सत्यानृते अवपश्यन् जनानां । याअग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योनाभवन्तु ॥ २ ॥ ओँ यामांदेवा दिविकृण्वन्ति भक्ष्यं या अन्तरीक्षे बहुधाभवन्ति । या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शंस्योनाभवन्तु ॥ ३ ॥ ओँ शिवेन माचक्षुषा पश्यतापः शिवया तन्नोपस्पृशतत्वचम्मे । घृतश्च्युतः शुचयः पावकास्तान आपः शंस्योनाभवन्तु ॥ ४ ॥ ओँ शन्नोदेवीरभीष्टये शन्नोभवन्तुपीतये शंयोरभिस्रवन्तुनः ॥ ओँ शन्न आपोधन्वन्याः शमनः सन्तु नूप्याः शन्नः समुद्रिया आपः शमनः सन्तु कूप्याः । ओँ द्रुपदादिव मुमुचानः स्विन्नः स्नातोमलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः । ओँ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदुद्रोह यद्वाशेपततानृतं । एभिः सम्मार्जनं कृत्वा । अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दो भाववृत्तोदेवता अश्वमेधावभृथे विनियोगः । इति स्मृत्वा जले निमग्नोभूत्वा ओँ ऋतञ्चसत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत अहोरात्राणि विदधद्विश्वस्यमिषतोवशी सूर्य्याचन्द्रमसौधाता यथापूर्व्वमकल्पयत् दिवञ्चपृथिवीञ्चान्तरीक्षमथोस्वः इत्येतन्मन्त्रं वारत्रयं पठेत् । तत ओँ भुः ओँ भूवः ओँ स्वरित्यनेन शिरसि जलाञ्जलित्रयं दद्यादिति क्रियास्नानप्रयोगः ॥ * ॥ अथा-

घमर्षणमाहात्म्यं॥ बौधायनः। ऋतञ्चसत्यञ्चाघमर्षणं त्रिरन्तर्जले जपन् सर्व्वस्मात् पापात् प्रमुच्यते॥ योगियाज्ञवल्क्यः॥ हुत्वाद्बोकानिमांस्त्रीन् हि त्रिः पठेदघमर्षणं। यथाश्वमेधाव भृथमेवन्तं मनुरब्रवीत्। यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदकः। तथाघमर्षणं मन्त्रः सर्व्वपापप्रनोदकः॥ अथ क्रमिजवस्त्रेण स्नाननिषेधः॥ मात्स्ये। क्रमिजेन तु वस्त्रेण यः स्नानं कुरुते नरः। मन्त्रकालकृतं पुण्यं स्नानमात्रेण नश्यति॥ *॥ अथ वैष्णवस्नानं। पद्मपुराणे। गत्वा तीर्थं नमस्कृत्य तटं प्रक्षालयेत्ततः। कौर्म्मे। धौतवस्त्रं कुशांश्चैव मृत्तिकाञ्च तटे न्यसेत्। अधौतेन तु वस्त्रेण नित्य-नैमित्तिकीं क्रियां। कुर्व्वन्न फलमाप्नोति तस्माद्धौतेन चाचरेत्। धौताङ्घ्रिपाणिराचान्तः कृत्वा सङ्कल्पमादरात्। गङ्गादि-स्मरणस्यान्ते तीर्थायार्घ्यं समर्पयेत्। सागरस्वन-निर्घोष दण्डहस्तासुरान्तक। जगत्स्रष्टज्ज गन्धर्द्दिन्नमामि त्वां सुरेश्वर। इमं मन्त्रं समुच्चार्य्य तीर्थस्नानं समाचरेत्। अन्यथा तत्फलस्यार्द्धं तीर्थेशो हरति स्वयं। नत्वाथ तीर्थं स्नानार्थमनुज्ञां प्रार्थयेदिमां। देवदेव जगन्नाथ शङ्ख-चक्रगदाधर। देहि विष्णो ममानुज्ञां तव तीर्थनिषेवने। नारसिंहे। मृत्तिकान्तु त्रिधा कृत्वा भागेनैकेन लेपयेत्। दक्षिणेनैव हस्तेन अष्टावेतान्यनुक्रमात्। ललाटमंशौ हृत् पृष्ठमुदरं कक्षकावुभौ। ततोवामकरेणैव नाभ्यूरुजानु-जङ्घकं। दक्षिणादिक्रमेणैव चरणौ च त्रिभिस्त्रिभिः॥ मृदा

तृतीयभागेन करौ च त्रिः प्रमार्जयेत्। विधिवन्मृदमादाय तीर्थतोये प्रविश्य च। प्रवाहादिमुखो नद्यां स्यादन्यत्रार्क-संमुखः। दिग्वन्धं विधिनाचर्य्य तीर्थानि परिकल्प्य च। आवाहयेद्भगवतीं गङ्गामादित्यमण्डलात्। दर्भपाणिः कृत-प्राणायामः कृष्णपदाम्बुजं। ध्यात्वा तन्नाम संकीर्त्य निमज्जेत् पुण्यवारिणि। तत आचम्य मूलञ्च सप्राणायामकं जपन्। कृष्णं ध्यायन् जले भुयो निमज्ज्य स्नानमाचरेत्। ततः कृत्वा-घमर्षान्तं नामभिः केशवादिभिः। तत्र द्वादशधा तोये निमज्ज्य स्नानमाचरेत्॥ इति हरिभक्तिधृत गौणस्नानं॥ * ॥

अथ तान्त्रिकस्नानं॥ मन्त्रतन्त्रप्रकाशे। अरुणोऽनुदिते मन्त्री तीर्थे वा विमले जले। वैदिकं स्नानमाचर्य्य तान्त्रिक-स्नानमाचरेत्। विश्वसारे। परस्वाते तु कर्त्तव्यं पञ्चपिण्डोद्धरं सुधीः। अकृत्वा स्नानमाचर्य्य कर्त्तुः पापेन लिप्यते। तत्र मन्त्रः। उत्तिष्ठोत्तिष्ठ पङ्क त्वं त्यज पुण्यं परस्य च। पापानि विलयं यान्तु शान्तिं कुरु सदा मम। एतदनुत्सृष्टजलाशय-विषयमिति शाक्तानन्दतरङ्गिणी युक्तमेतत्। परकीयनि-पानेषु न स्नायाच्च कदाचन। निपानकर्त्तुः स्नात्वा तु दुष्कृतां-शेन लिप्यते इति मनुवचनव्याख्याने अकृत्रिमनद्याद्य-सम्भवे परकृतेऽपि पुष्करिण्यादौ प्राक् प्रदानात् पञ्च पिण्डानुद्धृत्य-स्नातव्यमिति कुल्लूकभट्टलिखनात्। यानशय्यासनान्यस्य कूपोद्यानगृहाणि च। अदत्तान्युपयुञ्जान एनसः स्यात्तुरीय-भागिति मनुवचने सर्व्वार्थोत्सृष्ट-मठ-कूपादौ न दोष इति

कुल्लूकभट्टव्याख्यानाच्च । यत्त, यत्र सर्व्वाय चोत्सृष्टं यच्चा-भोज्यनिपानजं । तद्वर्ज्ज्यं सलिलं तात सदैव पितृकर्म्मणीति मार्कण्डेयवचनं तदनुद्धृत-मृत्पिण्डपरं । तत्त्वकारमते तु उत्सृष्ट कूपादपि घटपिण्डोद्धार इति ॥ अस्य परस्येत्यर्थः । तन्त्रसारधृत गौतमीयैः । मलप्रक्षालनं स्नानं स्वशाखोक्तं समाचरन् । मन्त्रस्नानं ततः कुर्य्यान्मन्त्राणां सिद्धिहेतवे । मन्त्रतन्त्रप्रकाशे । अस्त्रेणानीय मृत्स्नां वै त्रिभागं तत्र कारयेत् । भागमेकं जले चैव क्षिपेन्मन्त्रं समुच्चरन् । एवं मूर्द्धादि-नाभ्यन्तं पठन् मूलं विलेपयेत् । शेषं पादादिनाभ्यन्तं तथैव परिलेपयेत् । अङ्गे षडङ्गं विन्यस्य प्राणायामपुरः-सरं । ब्रह्माण्डे यानि तीर्थानि करैः स्पृष्टानि तानि ते । तेन सत्येन मे देव तीर्थं देहि दिवाकर । आवाहयिष्ये त्वां देवि स्नानार्थमिह सुन्दरि । एहि गङ्गे नमस्तुभ्यं सर्व्वतीर्थसमन्विते । क्रोंमन्त्राङ्कुशमुद्राभ्यां तीर्थमाकृष्य मण्डलात् । एवमावाह्य विधिवन्मूलमन्त्रेण मन्त्रयेत् । आमन्त्राम्भसि सञ्चिन्त्य सोमसूर्य्याग्निमण्डलं । विचिन्त्य मन्त्री तन्मध्ये निमज्जेन्मूल-मुच्चरन् । उत्थायाचम्य तत् पश्चात् षडङ्गन्याससंयुतः । आत्मानं दशधा सिञ्चेन्मुद्रया कलसाख्यया । ससकृत्वोभिषिञ्चे-द्वा मनुना मन्त्रितैर्जलैरिति ॥ तत्रायं । वैदिकस्नानं कृत्वा निनत्नमाद्‌स्रोकृशग्रत्रयमसितयारिपर्णाष्टाङ्गलान्यूनताम्रादि-पात्रमादाय ओँ तत्सदित्युच्चार्य्य सङ्कल्पं कुर्य्यात् । ताम्रपात्रं सदूर्व्वञ्च सतिलं सजलन्ततः । गृहीत्वामुकदेवस्य प्रीतये

स्नानमाचरेदिति कुलचूड़ामणिवचनात्। ततः फड़िति मन्त्रेण मृत्तिकामानीय त्रिभागं कृत्वा मूलेन भागमेकं जले-क्षिप्तापरमृद्भागेन मूर्द्धादिनाभ्यन्तं परिलिप्यावशिष्टमृद्भागेन पादादिनाभ्यन्तं लेपयेत्। ततः प्राणायाम-षड़ङ्गन्यासौ कृत्वा चतुरस्रमण्डलं निर्म्माय क्रौँ मन्त्राङ्कुशमुद्राभ्यां ओँ ब्रह्माण्डे यानि तीर्थानि करैः स्पृष्टानि तानि ते। तेन सत्येन मे देव तीर्थं देहि दिवाकर। ओँ आवाहयिष्ये त्वां देवि स्नानार्थमिह सुन्दरि। एहि गङ्गे नमस्तुभ्यं सर्व्वतीर्थसमन्विते। इति सूर्य्यमण्डलात्तीर्थमावाह्य वमिति धेनुमुद्रया अमृतीकृत्य हुं इत्यवगुण्ठ्य फड़िति संरक्ष्य मूलेनैकादशधाभिमन्त्र्य मामसूर्य्याग्निमण्डलं संयोज्य द्वादशधा त्रिधा वा सूर्य्याभिमुखं वारि निक्षिप्य तस्मिन् इष्टदेवताचरणारविन्दनिःसृतजलं विचिन्त्य देवतां ध्यायन् मूलं यथाशक्ति जपन् त्रिर्निमज्ज्य उत्थायाचम्य षड़ङ्गन्यासं कृत्वा ओँ इत्यनेन त्रिवारजप्तेन उदकेन कलसमुद्रया दशधा सप्तधा वा आत्मानमभिषिच्य सूर्य्यार्घं दद्यादनेन।—ओँ फ्रौँ हंस इदमर्घ्यं सूर्य्याय स्वाहा॥ आचारादर्शे। अदत्वा तिलकं स्नात्वा योऽन्यान् पश्यति तत्क्षणात्। लिप्यते पातकैस्तेषां पुनः स्नानं समाचरेत्। तथा मत्स्यसूक्ते। अकृत्वा तिलकं भाले चण्डालं यस्तु पश्यति। पुनः स्नानन्तु कर्त्तव्यं विण्मूत्रोच्चारणे तथा॥ * ॥ अथ सन्ध्या॥ व्यासः। सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्व-कर्म्मसु। स यत्तु कुरुते कर्म्म न तस्य फलमश्नुते। विष्णुपुराणे।

तस्माद्वो लङ्घनं कार्य्यं सन्ध्योपासनकर्म्मण.। स हन्ति सूर्य्यं सन्ध्याया नोपास्तिं कुरुते हि यः। अग्निपुराणं। सन्ध्या येन न विज्ञाता न च सन्ध्याप्युपासिता। जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते। नोपतिष्ठति यः पूर्व्वां नोपास्ते यश्च पश्चिमां। स साधुभिर्व्वहिः कार्य्यः सर्व्वस्मात् द्विजकर्म्मणः॥ व्युत्क्रमे दोषमाहात्रिः॥ सायं प्रातस्तु यः सन्ध्यां प्रमादाद्व्युत्क्रमेत् सकृत्। गायत्र्यास्तु सहस्रं हि जपेत् स्नात्वा समाहितः। व्यासः। प्रातःसन्ध्यां सनचत्रां मध्यमां स्नानकर्म्मणि। सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि। मध्यमामिति माध्याह्निक-स्नानकर्म्मणि मध्याह्नसन्ध्यां कुर्य्यादित्यर्थः। ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च। कथं नोपासते देवीं सिद्धिकामा द्विजातयः। योगियाज्ञवल्क्यः॥ यावन्तोऽस्यां पृथिव्यां हि विकर्म्मस्थास्तु वै द्विजाः। तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा। यमः। सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनं। सायं प्रातस्तु यः सन्ध्यां माचां वै पर्य्युपासते। अहैव पावनी देवीं सावित्रीं लोकमातरं। स तया पावितो देव्या ब्राह्मणो धूतकल्मषः। न सीदेत् प्रतिगृह्णानः पृथिवीञ्च ससागरां ये चान्ये दारुणाः केचित् ग्रहाः सूर्य्यादयो भुवि। ते चास्य सौम्यतां यान्ति शिवाः शिवतरास्तथा। कात्यायनः सन्ध्यालोपाच्च चकितः स्नानशीलश्च यः सदा। तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः। सम्वर्त्तः। अथाचर

कुशैर्युक्त आसने समुपस्थितः । करसम्पुटकं कृत्वा सन्ध्यां नित्यं समारभेत् । पतितसन्ध्या चान्यसन्ध्यासमये कर्त्तव्या, तदाह त्रिपुरार्णवे । सन्ध्याहीनोऽसन्ध्यायां पूर्व्वसन्ध्याक्रियामथ । विधायोत्तरसन्ध्यायाः क्रियां कुर्य्यात् समाहितः । सन्ध्या-कालव्यतीते तु न च सन्ध्यां समाचरेत् । गायत्रीं दशधा जप्ता पुनः सन्ध्यां समाचरेत् ॥ अथ गायत्रीमाहात्म्यं व्यासः । गायन्तं त्रायते यस्माद्गायत्रीति ततः स्मृता । धार्म्मरे । इमां यो वेत्ति गायत्रीं सर्व्वबीजसमन्वितां । स वेत्ति चतुरो वेदान् योगज्ञानं जगत्त्रये । त्रिसन्ध्यं यो जपेन्नित्यं गायत्रीं छायनं द्विजः । तस्य पापं चयं याति जन्मकोटिशतार्ज्जितं । गायत्र्युच्चारमात्रेण पापकूटात् पुनाति च ॥ * ॥ अथ गायत्रीवर्णदेवता ॥ धार्म्मरे । प्रतिवर्णेश्वरं ज्ञात्वा विन्यस्य च कलेवरं । स जनो ब्रह्मतामिति फलं वक्तुं न शक्नुमः । प्रत्यचरस्य देवस्तु शृणु पुत्र वदाम्यहं । यज्ज्ञात्वा च पुनर्म्मातुः स्तनं पिबति नो द्विजः । आग्नेयं प्रथमं दैवं वामदेवं द्वितीयकं । तृतीयं सोमदैवत्यं चतुर्थं वैद्युतन्तथा । पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते । सप्तमं वार्हस्पत्यञ्च पार्ज्जन्यञ्चाष्टमं विदुः । ऐन्द्रन्तु नवमं ज्ञेयं गान्धर्व्वं दशमं स्मृतं । पौष्ण-मेकादशं विद्धि मैत्रं द्वादशकं स्मृतं । त्वाष्ट्रं त्रयोदशं ज्ञेयं वामनञ्च चतुर्द्दशं । मारुतं पञ्चदशकं सौम्यं षोड़शकं स्मृतं । आङ्गिरसं सप्तदशं वैश्वदेवमतःपरं । आश्विनञ्चैकोनविंशं प्राजापत्यञ्च विंशकं । सर्व्वदेवमयं ज्ञेयं एकविंशकमक्षरं ।

रौद्रं द्वाविंशकं ज्ञेयं ब्राह्मं ज्ञेयमतःपरं। वैष्णवन्तु चतुर्विंशमिता अक्षरदेवताः। जपकाले तु संचिन्त्य तासु सायुज्यतां व्रजेत्। ज्ञात्वा तु देवतास्तस्या वाङ्मयं विदितं भवेत्। सर्व्वपापाद्विनिर्म्मुक्तो ब्रह्मणः पदवीं व्रजेत्॥ * ॥ अथ गायत्रीवर्णन्यासस्तत्रैव॥ * ॥ गायत्रीं विन्यसेत् पूर्व्वं शरीरे चात्मनो बुधः। चतुर्विंशतिस्थाने च पादादौ मस्तकोत्तरं। तकारं विन्यसेद्‌योगी पादाङ्गुष्ठे विचक्षणः। त्सकारं गुल्फदेशे तु विकारं जङ्घयान्यसेत्। तुकारं जानुमध्ये तु व्वकारञ्चोरुदेशतः। रेकारं गुह्यदेशे तु णकारं वृषणे न्यसेत्। यंकारं कटिदेशे तु भकारं नाभिमण्डले। गोंकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत्। वकारं हृदये न्यस्य स्यकारं कण्ठदेशतः। धीकारं वदने न्यस्य मकारं तालुके न्यसेत्। हिकारं नासिकाग्रञ्च धिकारं चक्षुषोर्न्यसेत्। योकारन्तु भ्रुवोर्म्मध्ये योकारन्तु ललाटतः। नःकारन्तु मुखं पूर्व्वं प्रकारं दक्षिणमुखं॥ चोकारं पश्चिमे न्यसेद्दकारमुत्तरे न्यसेत्। यात्‌कारं मूर्द्ध्नि विन्यस्य सर्व्वव्यापी व्यवस्थितः। एतान् विन्यस्य धर्म्मज्ञो ब्रह्मविष्णुशिवात्मकः॥ महायोगी महाज्ञानी परं निर्व्वाणतां व्रजेत्। इमं न्यासमकृत्वा तु गायत्रीं यो जपेत् द्विजः। जपक्लेशं तपस्तस्य निष्फलं नात्र संशयः॥ जपानुष्ठानमाह योगियाज्ञवल्क्यः॥ तिष्ठंश्चेद्वीक्ष्यमाणोऽर्कमासीनः प्राङ्मुखो जपेत्। प्रागग्रेषु कुशेष्वेवमासीनश्चासने शुभे। ध्यायेत्तु मनसा मन्त्रान् जिह्वोष्ठौ न विचालयेत्। न कम्पयेच्छिरो-

गीवं दन्तामैव प्रकाशयेत्। यक्ष-राक्षस-भूतानि सिद्धविद्या-धरागणाः। हरन्ति प्रसभं यस्मात्तस्माद्गुह्यं समाचरेत्। अग्न्यागारे जलान्ते वा जपेद्देवालयेऽपि वा। पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे। गृहे ह्येकगुणं जप्यं नद्यां तद्द्विगुणं स्मृतं। गवां गोष्ठे दशगुणं अग्न्यागारे शताधिकं। सिद्ध-क्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ। सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ। न क्लिन्नवासाः स्थलगो जपादीनाचरेद्बुधः। श्रुताहृते नाद्रवासा नैकवासाः समाचरेत्। न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत्। यदि वाग्यमलोपःस्याज्जपा-दिषु कथञ्चन। व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययं॥ * ॥ अथ तर्पणं॥ * ॥ शातातपः॥ तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमं। मनु-शातातप-योगियाज्ञवल्क्याः। यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः। तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलं। विष्णुः। स्नातश्चाद्रवासा देवपितृतर्पणमम्भस्थ एव कुर्य्यात्। परि-वर्त्तित-वासाश्च तीर्थतीरे उत्तीर्य्य। योगियाज्ञवल्क्यः। यत्रा-शुचि स्थलं वा स्यादुदके देवतापितॄन्। तर्पयेत् स यथाकाम-मप्सु सर्व्वं प्रतिष्ठितं। सुमन्तुः। आकाशात्तु क्षिपेद्वारि जलस्थो दक्षिणामुखः। पितॄणां स्थानमाकाशं दक्षिणादिक् तथैव च। नीरस्तोञ्जलिजलौन्दद्यादुच्चैरुच्चतरं ततः। गोशृङ्गमात्र-मुद्धृत्य जलमध्ये जलं क्षिपेत्। कार्ष्णाजिनिः। देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलीन्। असंस्कृतप्रमीतानां-

स्थले दद्याज्जलाञ्जलिं॥ शङ्खः। हैमेन सह यद्दत्तं क्षीरेण मधुना सह। ततोऽप्यक्षयतां याति पितॄणाञ्च तिलोदकं। याज्ञवल्क्यः। शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शवलैस्तिलैः पितॄंस्तु तर्पयेत् कृष्णैस्तर्पयन् सर्व्वदा द्विजः। देवादीनुपवीतीतु देवतीर्थेन तर्पयेत्। निवीती कायतीर्थेन मनुष्यान् सनकादिकान्। देवादिकर्म्मसु कुशव्यवस्थायां पिण्ड-पितृयज्ञीय-ब्राह्मणं। अग्रमेव देवानां मध्यमेव मनुष्याणां मूलमेव पितॄणां। अथ कुशोत्पाटन-पृथिवी-प्रार्थना-मन्त्रौ। श्रुतिरत्नाकरे। ओँ शिताशितसमुत्पन्न ब्रह्मविष्णु-शिवात्मक। धर्म्मार्थकाममोक्षाय दर्भं मे देहि मेदिनि। ओँ कुशोसि कुशमूलोसि ब्रह्मणा निर्म्मितः पुरा। देवपितृ-हितार्थाय कुशमुत्पाटयाम्यहं॥ छन्दोगपरिशिष्टं॥ यवाद्भि-स्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि। तर्पयेदित्यधिकारे योगियाज्ञवल्क्यः। अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना। आवाह्य पूर्व्व-वन्मन्त्रैरास्तीर्य्य च कुशान् शुभान्। प्रागग्रेषु सुरान् सम्यग्दक्षिणाग्रेषु वै पितॄन्। आवाह्य पूर्व्ववन्मन्त्रैरिति याज्ञवल्क्यसंहिताश्राद्धप्रकरणोक्तैः विश्वेदेवा स आगत इति। विश्वेदेवाः शृणुतेममिति देवान्। उशन्तस्त्वेति आयान्तु न इति पितॄन् आवाह्य इति हलायुधः। याज्ञवल्क्यः। सव्यं जानु ततो न्यस्य पाणिभ्यां दक्षिणामुखः। तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्व्वान् पितृगणांस्तथा। मातामहांश्च सततं श्रद्धया तर्पये-

द्वध:। प्राचीनावीतीत्युदकं प्रसिञ्चेद् तिलान्वितं। तल्लिङ्गैरिति ऊर्ज्जं वहन्ती रित्यादिभिः पितृत्वप्रकाशकैरित्यर्थ इति हलायुधः। देवतर्पणानन्तरं पद्मपुराणं। कृतोपवीती देवेभ्यो-निवीती तु भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषीं-स्तथा। शाट्यायनः। वसून् रुद्रांस्तथादित्यानृषींश्चैव यथाक्रमं। पूर्व्वामुखस्थितो विप्रोजलमध्ये तु तर्पयेत्। वायुपुराणं। ऋजून् सव्येन कृत्वातु दैवे दर्भान् विचक्षणः। दद्यात्तु द्विगुणान् पित्रेऽपसव्येनतु पार्थिव॥ लघुविष्णुः। निवीती हस्त-कारेण मनुष्यांस्तर्पयेदथ। गोभिलसंहितायां। एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः। अर्हन्ति पितरस्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्जलिं। हारीतः। देवान् छन्दांसि वेदान् ऋषीन् पुराणान् पुराणाचार्य्यान् गन्धर्व्वान् इतरान् आचार्य्यान् मनुष्यान् कलाःकाष्ठानिमेषान् मुहूर्त्तान् अहोरात्रान् अर्द्धमासान् मासान् ऋतून् संवत्सरान् सावयवान् इति। योगियाज्ञवल्क्यः। सनकश्च सनन्दश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा। एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्त्तिताः। प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या अपरेषामुदीचीं मनुष्या इति ज्योति-ष्टोमीयश्रुतिदर्शनात्। न चापरेषामुदीचीं मनुष्या इति दर्शनात् वाजसनेयिनामेवोदङ्मुखत्वमिति वाच्यं, अपरेषा-मित्यपरेषां मतमित्यर्थप्रतीतेः। मनुष्याणामुदग्दिगाश्रयणे वाजसनेयिनां कर्त्तव्यतयाविशेषानुपदेशात्। प्रादेशमात्रमुद्धृत्य

सलिलं प्राङ्मुखः सुरान् । उदङ्मनुष्या स्तृप्येत पितॄन् दक्षिण-तस्तथेति दक्षवचनात् मनुष्याणामिषादिक्, या च प्रतीचीति सामवेदीयपरिशिष्टवचनाच्च मतद्वयस्य प्रमाणत्वाद्व्यव-स्थितविकल्प एव सर्व्वेषामिति सुस्थितं ॥ योगियाज्ञवल्क्यः ॥ कव्यवालं नलं सोमं यममर्य्यमनन्तथा ॥ अग्निष्वात्तान् सोमपांश्च वर्हिषदः सकृत् सकृत् । यदि स्याज्जीवत्पितृक एतान् दिव्यान् पितॄंस्तथा । येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत् । अत्र जीवत्पितृकतर्पणविधायकं काम्यपरं । अतएव न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेदिति कृष्णतिल-निषेधमात्रं तत्त्वकारलिखितं नतु तर्पणनिषेधस्तर्पण-विशेषविति ॥ दक्षिणांशोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः । सन्तर्पयेद्दिव्यपितॄन् तत्परांश्च पितॄन् स्वकान् । इति रत्नाकर-धृतव्यासवचनविरोधात्, प्रागुक्तयोगियाज्ञवल्क्यवचने दिव्य-पितॄणां सकृत्तर्पणविधानं नित्यपरं वीप्साश्रुतेश्च । एवञ्च यत्पितृधर्म्मातिदेशेन दिव्यपितॄनामञ्जलित्रयदानं केनचिदुक्तं तद्व्यासवचनादर्शनेन । हारीतः । नारायणः पराशर्यः शुकः साकल्यः याज्ञवल्क्यः जातुकर्णः कात्यायनः आपस्तम्बः बौधायनः वाचंयमो वैजवापो कुहुः लौकाक्षिः मैत्रायणिः ऐन्द्रायणिः इत्येतान् ऋषीन् । कात्यायनः । यमांश्चैके । यमाय धर्म्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्व्वभूतक्षयाय च । औडुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः । एकैकस्य तिलैर्मि-

आन्दद्याच्चींस्त्रोञ्जलाञ्जलीन्। यावज्जीवकृतं पापं तत्-क्षणादेव नश्यन्ति। जीववत् पितृकोऽप्येतानन्यांश्चस्याद्यदीतरः। एतान् कव्यवालादीन् यमांश्च जीवत्पितृकोऽपि तर्पयेत्। इतरोऽजीवत्पितृकः अन्यान् पित्रादीन् कव्यवालादींश्च तर्पयेदित्यर्थ इति हलायुधः। योगियाज्ञवल्क्यः। एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः। आचार्य्यांश्च पितृव्यांश्च पितृप्रभृति नामतः। मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनैः। उदीरितानङ्गिरस आयान्ति तूर्जमित्यपि। नाम-गोत्रस्वधा-कारैस्तर्प्याः स्युरनुपूर्व्वशः। जातुकर्णः। प्रमीतपितृकस्तु उशन्तस्त्वेत्यावाह्य नामगोत्रमुच्चार्य्य यावता पितृकार्य्यं समावितत्ते उदकमिति पितॄन् पितामहान् प्रपितामहान् एकैकस्मै जलाञ्जलीन्दद्यादिति। अत्रैवं विविच्यते। असा-विति नाम गृह्णातीति कात्यायनोक्तस्य नाम्नस्ते इति युष्मत्-प्रयोगात् सम्बुद्ध्यन्ततापतीयते। तस्य सम्बुध्यमानार्थ-वाचित्वात् असम्बुद्धिप्रथमान्तत्वेऽनन्वयापत्तेः। ततश्च अमुक-गोत्रपितरमुकदेवशर्म्मं स्तृप्यस्वैतत्ते तिलोदकं स्वधा इति प्रयोगः सिध्यति। गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्य-कर्म्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति। सर्व्वत्रैव पितः प्रोक्तः पिता तर्पणकर्म्मणि। पितुरक्षय्यकालेतु अक्षयां तृप्तिमिच्छता। शर्म्मन्नर्घ्यादिके कार्य्यः शर्म्मा तर्पण-कर्म्मणि। शर्म्मणोऽक्षय्यकाले तु पितॄणां दत्तमक्षयं। इति गोभिलवचनेभ्यः अमुकगोत्रः पिता अमुक देवशर्म्मा तृप्यता-

मेतत्तिलोदकं तस्मै स्वधेति प्रयोगश्च सिध्यति । एतत् प्रयोगद्वये स्वधोल्लेखे प्रमाणं । नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्व्वश इति योगियाज्ञवल्क्य-वचनं पञ्चम्यन्ततृपधातुप्रयोगोल्लेखे प्रमाणं । तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना इति गोभिलवचनं । एवञ्च तुल्यत्वाद्योग्यत्वाच्च तृप्यस्वेत्युल्लेखेऽपि तदेव प्रमाणं । एतदुदकमित्यनयोरुल्लेखे प्रमाणं पुनरेतत्ते उदकमिति जातुकर्णवचनमेव । हारीतः । नामगोत्रयोरुच्चैर्वहन्तोरिति । स्नानवस्त्रमनिष्पीड्य स्नात् पितृंस्तर्पयेदिति । पराशरः । जलमध्ये तु यः कश्चिद्ब्राह्मणो ज्ञानदुर्ब्बलः । निष्पीड़यति तद्वस्त्रं स्नानं तस्य वृथा भवेत् । योगियाज्ञवल्क्यः । यावद्देवान् ऋषींश्चैव पितृंश्चैव न तर्पयेत् । तावन्न पीड़येद्वस्त्रं येन स्नातं न चोदके । निष्पीड़यति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात् । निराशाः पितरस्तस्य यान्ति देव-महर्षिभिः ॥ वस्त्रनिष्पीड़नं तोयं स्नानस्योत्सृष्टभागिनां । भागधेयमिति प्राह तस्मान्निष्पीड़येत् स्थले ॥*॥ अथ तर्पणप्रयोगः ॥*॥

प्राङ्मुख उपवीती उपविश्य प्रागग्रान् कुशानास्तीर्य दक्षिणहस्तेन यवान् गृहीत्वा । गृत्समदऋषि विश्वेदेवादेवता गायत्रीछन्दः अग्निष्टोमे वैश्वदेवग्रहणे विनियोगः । ओँ विश्वेदेवास आगत शृणुताम इमं हवं इदं वर्हिर्निषीदत एतन्मन्त्रं पठित्वा यवान् विकीर्य्य बद्धाञ्जलिः । सुहोत्रऋषि-विश्वेदेवादेवता त्रिष्टुप्छन्दः सर्व्वमेधे वैश्वदेव-ग्रहणे विनि-योगः । ओँ विश्वेदेवाः शृणुतेमं हवं ये मेऽन्तरीक्षे य उपद्य-

विष्ट येऽग्निजिह्वा उ वारा यजत्रा आसद्यास्मिन् वर्हिषि मादयध्वं। एवं मन्त्रं पठित्वा प्रागग्रकुशोपरि वामान्वारब्ध-दक्षिणहस्तेन ऋजुकुशाग्रेण दैवतीर्थेन यवोदकेन देवा-श्छन्दांसि वेदा ऋषयः पुराणाः पुराणाचार्य्या गन्धर्व्वा इतरा-चार्य्या मनुष्याः कलाः काष्ठा निमेषा मुहूर्त्ता अहोरात्रा अर्द्ध-मासा मासा ऋतवः संवत्सरा इत्येतेषां देवास्तृप्यन्तामित्यादि वाक्येन प्रत्येकमेकैकाञ्जलिना अष्टादशानां हारीतोक्ततर्पणं कुर्य्यात्। ततो निवीती उदङ्मुखः प्रत्यङ्मुखो वा कुशमध्येन मनुष्यतीर्थेन यवोदकेन उदगग्रकुशोपरि सनकः सनन्दः सनातनः कपिलः आसुरिः वोढुः पञ्चशिख इत्येतेषां प्रत्येक-मञ्जलिद्वयेन ओँ सनकस्तृप्यतां तस्मैतदुदकं स्वाहा इत्यादि वाक्येन योगियाज्ञवल्क्योक्त-तर्पणं कुर्य्यात्। ततः प्राङ्मुखो दैवतीर्थ्या ध्रुवो धरश्च सोमश्च विष्णुश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः। अजैकपादहिर्ब्रध्नो विरूपाक्षोऽथ रैवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। सावित्रश्च जयन्तश्च पिनाकी चापराजितः। एते रुद्राः समा-ख्याताः एकादशसुरोत्तमाः। इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्य्यमा। अर्च्चिर्व्विवस्वान् त्वष्टा च सविता विष्णुरेव च। एते वै द्वादशादित्या देवानां प्रवरा मताः। एतान् वसुरुद्रादित्यान् कार्ष्णाजिनिनालिखितान् प्रत्येकं तृप्यतामिति क्रियापदं दत्त्वा शाट्यायनोक्तविधिना तर्पयेत्। ततोऽनेनैव क्रमेण नारायणं पाराशर्य्यः शुकः साकल्यः याज्ञ-

वल्काः जातुकर्णः कात्यायनः आपस्तम्बः बौधायन-वाचक्नवी वैजवापी हुहुः लौकाक्षिः मैत्रायणिः ऐन्द्रायणिः इत्येतेषां ओं नारायण्यस्तृप्यन्तामिति वाक्येन हारीतोक्त-पञ्चदशर्षीणां तर्पणं कुर्य्यात् । ततोऽनेनैव क्रमेण यमाय धर्म्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्व्वभूतक्षयाय च । औडुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय इत्यत्र प्रत्येकं ओं यमाय नम इति वाक्येन कात्यायनोक्त-चतुर्द्दशयमानां तिलमिश्रितान् त्रींस्त्रीन् जलाञ्जलीन्दद्यात् । ततः प्राचीनावीती दक्षिणामुखो भुग्नकुशेन पितृतीर्थेन तिलोदकेन दक्षिणाग्रकुशोपरि कव्यवाडनलः सोमः यमः अर्य्यमा अग्निष्वात्ताः सोमपा वर्हिषदः इत्येतेषां तृप्यतां तृप्यन्तामिति यथायोगं क्रियापदं दत्वा याज्ञवल्क्योक्तानां दिव्यपितॄणां प्रत्येकं त्रिस्त्रिः सकृत् सकृद्वा तर्पणं कुर्य्यात् । ततः शङ्खऋषिरनुष्टुप् छन्दः पितरो देवता सोपामच्यामग्नुरपस्थापने विनियोगः । ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे । एवं मन्त्रं पठित्वा तिलान् विकीर्य्य बद्धाञ्जलिः । ओं आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान् अनेन मन्त्रेण पितॄनावाहयेत् । ततः प्रजापतिऋषिरापो देवता विराट् छन्दः पितृपितृव्यस्त्री पितृसेचने विनियोगः । ओं ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत

मे पितॄन्। एतन्मन्त्रपाठपूर्व्वकं अमुक-गोत्रपितरमुक देव-शर्म्मंस्तृप्यस्वैतत्ते तिलोदकं स्वधेति। सामगानान्तु। अमुक गोत्र: पिता अमुक देवशर्म्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति पितुरञ्जलित्रयन्दद्यात्। एवं पितामह-प्रपितामह-मातामह-प्रमातामह वृद्धप्रमातामहानां प्रत्येकमञ्जलित्रयन्दद्यात्। तत: अमुकगोत्रे मातरमुकि देवि तृप्यस्वैतत्ते तिलोदकं स्वधा। अमुकगोत्रा माता अमुकी देवी तृप्यतामेतत्तिलोदकं तस्यै स्वधेति मातुरञ्जलित्रयन्दद्यात्। एवं पितामही-प्रपितामह्या: प्रत्येकमञ्जलित्रयन्दद्यात्। एवं मातामही प्रमातामही-वृद्ध-प्रमातामहीनां प्रत्यकमेकैकाञ्जलिना तर्पणं कुर्य्यात्। तथा पितृव्यमातुलादीनां तर्पणं कुर्य्यात्। तत: कामोदकाञ्जलि-त्रयं। ब्राह्मणसर्व्वस्वीय-कामोदकाञ्जलित्रये प्रथमाञ्जलौ देवतीर्थत्वमाह योगियाज्ञवल्क्य:। तर्पयित्वा यथाकाम-मुपवीती तत: पुन:। उपकाराय भूतानां प्राङ्मुखस्तर्पयेद्बुध:। ओं देवासुरास्तथा नागा यक्षा गन्धर्व्वराक्षसा:। पिशाचा गुह्यका: सिद्धा: कुष्माण्डास्तरव: खगा:। जलचरा भूमिलया वाय्वाहाराश्च जन्तव:। प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिला: इति श्लोकद्वयेन प्राङ्मुखो देवादीनां देववदेकाञ्जलिं दद्यात्। अपराञ्जलिद्वये त्वाचारात् पितृतीर्थत्वमिति। ततो, नरकेषु समस्तेषु यातनासु च ये स्थिता:। तेषामाप्यायनायैतद्दीयते सलिलं मयेत्यनेन प्राचीनावीती दक्षिणामुख: पितृतर्पणवत् नरकस्थानामेकाञ्जलिं दद्यात्। तत:, ये बान्धवाऽबान्धवा वा

येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः। इत्यपरेण श्लोकमन्त्रेण तथैवापरमेकाञ्जलिन्दद्यात्। अस्याञ्जलित्रयस्य कामोदकत्वं तद्दानफलञ्चाह विष्णुपुराणे। कामोदकप्रदानन्तु मयैतत् कथितं नृप। यद्दत्त्वा प्रीणयत्येतन्मनुष्यः सकलं जगत्। जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ। दत्त्वा कामोदकं सम्यगेतेभ्यः श्रद्धयान्वितः। इति तर्पणं समाप्य, ओं ये चास्माकं कुले जाता अपुत्त्रा गोत्रिणो मृताः। ते तृप्यन्तु मया दत्तं वस्त्रनिष्पाड़ितोदकमिति पठित्वा स्नानशाटीं निष्पीड़येत्। तथा च विष्णुपुराणं। समाप्य तर्पणं पश्चात् ये चास्माकं कुलेति च। स्नानशाटीञ्च निष्पीड्य अपुत्त्रांस्तर्पयेत सकृत्। नारसिंहे। *। सन्ध्यां कृत्वा तु दत्तार्घ्यं ततः पश्येद्दिवाकरं। योगियाज्ञवल्क्यः। तत आलोकयेत् सूर्य्यं हंसः शुचिसदित्यृचा। स याति ब्रह्मणः सद्म स्नात्वेत्तेतानया तु यः। मन्त्रो यथा ब्राह्मणसर्व्वस्वे। ओं हंसः शुचिसद्वसुरन्तरीक्षसद्धोता वेदिसदतिथिर्दुरोणसत् नृसद्वरसदृतसद्व्योम-सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। ततः, ओं कृताञ्जलिर्व्विधाता च यस्योदयमुदीक्षते। तस्मै देवातिदेवाय जगतां चक्षुषे नम इत्यनेन प्रणमेत्। अथ तर्पणादिषु तिलग्रहणं॥ आचारादर्शे। तर्पणे सर्व्वयज्ञेषु श्राद्धे दाने व्रतेषु च। तिलस्य सदृशं नास्ति कर्म्मणां पुष्टिवर्द्धनं। ततः श्वेतान् परित्यज्य कृष्णैः सन्तर्पयेत् पितॄन्। तर्पणे दश चाष्टौ च सङ्कल्पे सप्त चेरितं। दानोत्सर्गे पञ्च

पञ्च श्राद्धकर्म्मणि द्वादश। तर्पणे पितृयज्ञादौ तिलो विल्वो-
पमो भवेत्। दशभिस्तु तिलैस्तेन पितॄणां तृप्तिरुत्तमा।
अग्निस्तम्भभयादेव नत्विष्टं ह्यतिविस्तरं॥ गङ्गायांमनियम-
माह भविष्ये। यावन्तश्च तिला मर्त्त्यैर्गङ्गे हीताः पितृकर्म्मणि।
तावद्वर्षसहस्राणि पितरः स्वर्गगामिनः॥ अथ तर्पण-कालः॥
धार्म्मे। प्रातः सन्ध्यासमीपे च यावद्दण्डचतुष्टयं। तावत्
पानायसमृतं पितॄणामुपतिष्ठते। परतो घटिका-युग्मं यावद्-
यामैकसंज्ञितं। मधुतुल्यं जलं तस्मिन् पितॄणां प्रीतिवर्द्धनं।
ततश्च सार्द्धयामैकं जलं क्षीरमयं स्मृतं। क्षीरमिश्रं जलं तावद्-
यावद्दण्डचतुष्टयं। अतःपरञ्च पानीयं यावत्तत् प्रहरत्रयं। तत्परं
लोहितं प्रोक्तं यावदस्तगता निशा। चतुर्थप्रहरे स्नाने रात्रौ
वा तर्पयेत् पितॄन्। तत्तोयं रक्षसामेव ग्रहणेन विना सुत।
पानीयं सर्व्वशुद्ध्यर्थं पुरैव निर्म्मितं मया। रक्षार्थं
तस्य तोयस्य यक्षाश्चैव धनुर्द्धराः। न प्राप्नुवन्ति पितरो
ये च लोकान्तरं गताः। दुष्प्राप्यं सलिलं तेषां सुलभं
मर्त्त्यवासिनां॥ तस्माच्छिष्यैश्च पुत्रैश्च पौत्रै र्दौहित्रकादिभिः।
बन्धुवर्गै स्तथाचान्यैस्तर्पयेद्विधिवत् सदा। यावदस्तगता
निशेति एतच्चारुणोदयकालेतरपरं, त्रियामां रजनीं प्राहुरिति
ब्रह्मवैवर्त्तानुसारात् कथमन्यथा प्रातःस्नाने शिष्टानां तर्पणा-
चरणं॥ * ॥ अथ वस्त्रधारणं ॥ * ॥ गौतमीये। पीड़यित्वाम्बरं
चारु प्रक्षाल्याचम्य वाग्यतः। धारयेद्वाससी शुद्धे परिधानोत्त-
रीयके। अच्छिन्ने सदृशे शुक्ले आचामेत् पीठसंयुतः।

मत्स्य-सूक्ते। उत्तरीयं वाससी धौते परिधाय विचक्षणः। अष्टौ सप्त तथा षष्ठ अनुक्रमात्। ब्राह्मणादि-क्रमेणैव पिधानाम्बरमादिरं। काशीखण्डं। स्नानं दानं तपो होमं स्वाध्यायः पितृतर्पणं। वृथा तस्य महायज्ञा नालिवासो बिभर्त्ति यः। नीलरक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत्। तन्तुमन्तानमंख्याकैर्नरके स वसेद् ध्रुवं। अहो-रात्रोषितो भूत्वा पञ्चगव्येन शुध्यति। मात्स्ये। श्वेतं रक्तं तथा पीतं कृष्णञ्चेत्यनुपूर्व्वशः। वस्त्र-मूलं समुद्धृत्य पृष्ठ-वंशे षड़ङ्गुलं। दशाग्रात् चाङ्गुलं त्यक्त्वा नाभिमात्रे विनिर्द्दिशेत्। दशाहीनं न कर्त्तव्यं परिवर्त्तं न कारयेत्। अनुपूर्व्वश इति ब्राह्मणाद्यनुक्रमेणेत्यर्थः। आचारादर्शे यमः। नातिनीचं प्रकुर्व्वीत जानुमात्रावलम्बितं। अकच्छश्च विकच्छश्च मुक्तकच्छ-स्तथैव च। अवासा बहुवासाश्च नग्नः पञ्चविधो मतः। नाभेरधः कृते सम्यक् न दोषो बहुवाससां। विकच्छा बहिर्बद्धकच्छ इत्यर्थः। मात्स्ये। कला कार्पासवस्त्रञ्च पट्टक्षौमं प्रशस्यते। नित्यं क्षापचितं कुर्य्यादशुद्धं शुद्धितामियात्। सूचीविद्धेन वस्त्रेण आखुदष्टेन वा पुनः। कटिशून्येन देवेशि सर्व्वं स्नानफलं हरेत्। क्षापचितमिति केन जलेनापचितं प्रक्षालितमित्यर्थः इति रत्नाकरः। वर्षभास्करधृत पराशरः। पादुकाश्चोत्तरीयञ्च तर्ज्जन्यां रूप्यमेव च। न जीवत्-पितृकः कुर्य्याज्ज्येष्ठे भ्रातरि जीवति। एतदपि कर्म्मकालातिरिक्त-कालपरं अन्यथा उत्तरीयाभावात् कर्म्मानधिकारापत्तेः॥

पादुकामित्येकवचननिर्देशात् ,पादपीठमित्यविरोधः॥ पाद-प्रक्षालने देवलः॥ प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेत्ततः। उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः। समौ तच्चरणौ कृत्वा तथा बद्धशिखो नृप। पादं प्रक्षालयेद्विप्रो दक्षिणं प्रथमं सदा। शूद्रस्तु वामं प्रथमं सामवेदो तथा बुधः। ऊर्द्धजङ्घेन विप्रस्तु पादौ प्रक्षालयेद्यदि। तावद्भवति चाण्डालो यावद्गाङ्ग न पश्यति। क्रियायोगसारे। उपविष्टः पादयुगं बुधः सव्येन पाणिना। यत्नात्तु क्षालयेद्विप्र! तथापाणिद्वयन्ततः। पादेन पादं विप्रेन्द्र! तथा दक्षिणपाणिना। यश्च प्रक्षालयेन्मूढस्तं लक्ष्मी-स्त्यजति द्रुतं॥*॥ आसनमाह तन्त्रे। कुशासने भवेदायुर्मोक्षः स्यात् व्याघ्रचर्मणि। गव्याजिने भवेत् पुष्टी कम्बले सिद्धि-रुत्तमा। शान्तिके धवलं प्रोक्तं सर्व्वार्थं चित्रकम्बले। स्यात् पौष्टिके तु कौषेयं सर्व्वसिद्धिप्रदायकं। गन्धर्व्वतन्त्रे॥ कृष्णाजिने गृहस्थानां नाधिकारः कदाचन॥ अथ शिखाबन्धनं॥ रामार्च्चनचन्द्रिकायां। स्मृत्वा प्रणवगायत्रीं निबध्नीया-च्छिखां द्विजः। वामनपुराणम्॥ अष्टाङ्गुलं परित्यज्य ललाटात्तु विचक्षणः। त्रिरावृत्तेन गायत्र्या बध्नीयाद्दक्षिणे शिखां। व्यासः॥ शिखाबद्धस्तु गायत्र्या नैरृत्यां ब्रह्मरन्ध्रतः॥ अथ तिलकं॥ श्यामाप्रदीपे। नातिलको कर्म्म कुर्व्वीत। मत्स्यसूक्ते। तथोपविश्य पूर्व्वाशामुखो भूत्वा सुसंयतः। प्रकुर्य्यात्तिलकं मन्त्री उत्तराशामुखोऽपि वा। योगिनीतन्त्रे। मलयजेन गन्धेन गोपीचन्दनकेन वा। विल्वकाष्ठोद्भवेनाथ

तुलसीकाष्ठकेन च। पद्मकेन तमालेन तथा रोचनयाथवा। पिधानातिलकश्रेष्ठमेषामेकतमेन वै। यत्तु विल्ववृक्ष-मुपक्रम्य। तत्काष्ठचन्दनं भाले यो धारयति सत्तमात्। तत्तनुं शिवबुद्ध्या सा नमेद्देवी मुदान्विता। अतस्तच्चन्दनं देवि न धारयति कश्चन। तत्पत्रं तत् प्रसूनञ्चा धारयेन्न कदापि हि। इति योगिनीतन्त्रीय वचनान्तरं तद्रागप्राप्त-विषयं। तिलकमृत्तिका तत्रैव। जलस्था मृत्तिका वज्ज्यां तीरस्थं पुण्यदायकं। तस्मात्तीरोद्भवं ग्राह्यमश्वक्रान्तेति संपठन् उत्थाय तिलकं कुर्य्यान्मृदा स्त्री सरिता बुधः। ग्रस्तञ्च जाह्नवी तोयोद्भवैर्व्वा गोपीचन्दनैः। गोरोद्भवैर्मृत्तिकाभिरिति शेषः पाद्मे। पर्व्वताग्रे नदीतीरे विल्वमूले जलाशये। सिन्धुतीरे च वल्मीके हरिक्षेत्रे विशेषतः। विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः। पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकां। पर्य्योरं नारसिंहादौ वाराहे तुलसीवने। गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह। धृत्वा पुण्ड्राणि चाङ्गेषु विष्णुसायुज्य-माप्नुयात्। गारुड़े। यो मृत्तिकां द्वारवतीसमुद्भवां, करे समा-दाय ललाट-पट्टके। करोति नित्यन्त्वथ चोर्द्ध्व पुण्ड्रं, क्रियाफल कोटिगुणं तदा भवेत्। यो धारयेत् कृष्णपुरीसमुद्भवां, सुर पवित्रां कलिकल्मिषापहां। नित्यं ललाटे हरिमन्त्रसंयुतां यमं न पश्येत् यदि पापसंवृतः। ब्रह्माण्डपुराणं। वीच्यादौ जले वापि यो विदध्यात् प्रयत्नतः। ऊर्द्ध्वपुण्ड्रं महाभाग स याति परमां गतिं। पाद्मे। कुशेनैव सुवर्णेन न काष्ठेनायसेन

च। न शङ्खेन न ताम्रेण न कांस्येन कदाचन। तुलस्या विल्व-काष्ठेन रजतेन समुल्लिखेत्॥ अथ तिलकेऽङ्गुल्यादिनियमः॥ तिलकाधिकारे स्मृतिः। अनामिका कामदोक्ता मध्यमायुष्करी भवेत्। अङ्गुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मोक्षसाधनी। एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत्॥ तिलकमन्त्रस्तु मत्स्यसूक्ते। ओं केशवानन्द गोविन्द वराह पुरुषोत्तम। पुण्यं यशस्यमायुष्यं तिलकं मे प्रसीदतु॥ पाद्मोत्तरखण्डे। श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा। श्रीकरं पीतमित्याहुः श्वेतं मोक्षप्रदं शुभं॥ ब्रह्माण्डपुराणे। दशाङ्गुलप्रमाणन्तु उत्तमोत्तममुच्यते। नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतःपरं। वर्त्तिदीपाकृतिं वापि वेणुपत्राकृतिन्तथा। पद्मस्य कुट्मलाकारं तथैव कुमुदस्य च॥ मत्स्यकूर्म्माकृतिं वापि शङ्खाकृतिमतःपरं। आभ्रुवं तिलकं दद्याद्वत्सुमश्च द्विजोत्तमः॥ पत्रवद्वीरणस्यैव क्षत्रियेण च पार्थिव। वैश्येन तिलकं देयं दूर्व्वायाः पत्रवत्तथा॥ शूद्रेण तिलकं कार्य्यं वर्त्तुलं केशसन्निधौ। पाद्मोत्तरखण्डे॥ ऊर्द्ध्वपुण्ड्रं ललाटे तु सर्व्वेषां प्रथमं स्मृतं। आरभ्य नासिकामूलं ललाटान्तं लिखेन्मृदा॥ नासिकायास्त्रयो भागा नासामूलं प्रचक्षते। समारभ्य भ्रुवोर्म्मध्यमन्तरालं प्रकल्पयेत्॥ अच्छिद्रमूर्द्ध्वपुण्ड्रन्तु ये कुर्व्वन्ति द्विजाधमाः। तेषां ललाटे सततं शुनः पादो न संशयः॥ तस्माच्छिद्रान्वितं पुण्ड्रं दण्डाकारं सुशोभनं। विप्राणां सततं धार्य्यं स्त्रीणाञ्च शुभदर्शने॥ नासादिकेशपर्य्यन्तमूर्द्ध्वपुण्ड्रं सुशोभनं। मध्ये छिद्रसमायुक्तं

तद्विद्याद्धरिमन्दिरं॥ एकान्तिनो महाभागाः सर्व्वभूतहिते रताः। सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिं॥ वामपार्श्वे स्थितो ब्रह्मा दक्षिणे तु सदाशिवः। मध्ये विष्णुं विजानीयात्तस्मान्मध्यं न लेपयेत्॥ अत्र मध्यमूलत्वावच्छिन्नत्वेन त्रिभागप्रतिपत्त्यर्थं त्रयो भागा इति अन्वितपदयोः पदाध्यारोपलक्षणया पश्चात् त्रयाणां भागानां पूरणभागस्यैव प्रतीतिः। स एव भागो नासामूलं न चैवं पर्णपूरणन्यायेनाग्रभागस्यापि नासामूलपरिभाषाप्रसक्तिरिति वाच्यं त्रिभागमात्रप्रदर्शकवचने लोकव्यवहारादिकल्पनानुपयोगित्वात्। सिद्धानुगममात्रं हि कर्त्तुं युक्तं परीक्षकैः। न सर्व्वलोकसिद्धस्य लक्षणेन निवर्त्तनमित्यनुशासनाच्च॥ *॥ अथ तिलकनिषेधः॥ *॥ ब्रह्मपुराणं। न रात्रौ तिलकं कुर्य्यात् भुक्त्वा नैव च नैव च। महागुरुनिपाते च तिलकं नैव कारयेत्॥ पाद्मोत्तरखण्डे। वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घतरं तनु॥ वक्रं विरूपं बद्धाग्रं भिन्नमूलं पदच्युतं। अशुभं रूक्षमासक्तं तथा नाङ्गुलिकल्पितं॥ विगन्धमपसव्यञ्च पुण्ड्रमाहुरनर्थकं। पदच्युतं स्थानभ्रष्टं अशुभं मलिनं रूक्षमासक्तं अन्योन्यसंलग्नं विगन्धं दुर्गन्धि। नाङ्गुलिकल्पितमिति अल्पार्थे नञःप्रयोगात् स्वल्पाङ्गुलिकल्पितं कनिष्ठाङ्गुलिकल्पितमित्यर्थः। तथा च स्वल्पाङ्गुल्योर्मूले कार्यमित्यमरः॥ स्कान्दोत्तरखण्डे। ऊर्द्ध्वपुण्ड्रं धरेद्विप्रो मृदा शुभ्रेण वैदिकः। न तिर्य्यग्धारयेद्विद्वानापद्यपि कदाचन। यस्योर्द्ध्वपुण्ड्रं दृश्येत ललाटे नो

नरस्य हि। तद्दर्शनं न कर्त्तव्यं दृष्ट्वा सूर्य्यं निरीक्षयेत्॥ त्रिपुण्ड्रं यस्य विप्रस्य ऊर्द्ध्वपुण्ड्रं न दृश्यते। तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचेलं स्नानमाचरेत्। यानि तु—ऊर्द्ध्वञ्च तिलकं कुर्य्याद्दैवे पैत्रे च कर्म्मणि। वर्जयेत्तिलकं भाले श्राद्धकाले च सर्व्वदेति निर्णयसिन्धुधृत-वृद्धपराशरवचनं। ऊर्द्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः। श्राद्धकाले च संप्राप्ते श्राद्धभोक्ता च तत्त्यजेत्॥ वामहस्ते च दर्भांस्तु गृह्णे रङ्गावलिस्तथा। ललाटे तिलकं दृष्ट्वा निराशाः पितरो गता इति संग्रहोक्तवचनं। ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा। श्राद्धकर्त्ता न कुर्वीत यावत् पिण्डं न निर्वपेत्॥ इति विश्वप्रकाशवचनं। ऊर्द्ध्वपुण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचनेति बृहन्नारदीयवचनं। ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च। निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिमिति देवलवचनं इत्येतानि वचनजातानि तानि रागप्राप्तगन्धाद्यलङ्करणरूपोर्द्ध्वपुण्ड्रत्रिपुण्ड्रादिधारणनिषेधविषयाणि। प्राक् पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्य्यात् स्वविग्रहमित्याश्वलायनवचनात्। वैधस्य तु कर्त्तव्यतैव ऊर्द्ध्वपुण्ड्रधरो मर्त्त्य-कुर्य्याच्छ्राद्धं शुभानने। कल्पकोटिसहस्राणि वैकुण्ठे वासमाप्नुयादिति स्कन्दपुराणात्। यज्ञो दानं तपः श्राद्धं स्वाध्यायः पितृतर्पणं। वृथा भवति राजेन्द्र ऊर्द्ध्वपुण्ड्रं विना कृतमिति निर्णयसिन्धुधृतव्यासवचनाच्च॥ तुलसीं श्राद्धे नेच्छन्तीति वचनन्तु निर्मूलमिति हेमाद्रिः। तद्दिने श्राद्धकर्त्तार्हिततुलसापरमित्यपरार्कः। युक्त-

मेतत्—तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः। प्रयान्ति गरुड़ारूढ़ास्तत्पदं चक्रपाणिनः इति स्कन्दपुराणीयात्। पाद्मोत्तरखण्डे। ऊर्द्ध्वपुण्ड्रं मृदा सौम्यं ललाटे यस्य दृश्यते। स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः॥ ऊर्द्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे। लक्ष्म्या सार्द्धं समासीनो देवदेवो जनार्द्दनः॥ तस्माद्यस्य शरीरे तु ऊर्द्ध्वपुण्ड्रं धृतं भवेत् तस्य देहं भगवतो विमलं मन्दिरं स्मृतम्॥ ऊर्द्ध्वपुण्ड्रधरो विप्रः सूर्य्यलोकेषु पूजितः। विमानवरमारुह्य याति विष्णोः परं पदं॥ ऊर्द्ध्वपुण्ड्रधरो मर्त्यो म्रियते यत्र कुत्रचित् श्वपाकोऽपि विमानस्थो मम लोके महीयते॥ ऊर्द्ध्वपुण्ड्रधरं मर्त्यो गृहे यस्यान्नमश्नुते। तदा विंशं कुलं तस्य नरकादुद्धराम्यहं॥ अहं विष्णुः। स्कान्दे। ऊर्द्ध्वपुण्ड्रे स्थिता लक्ष्मीरूर्द्ध्वपुण्ड्रे स्थितं यशः। ऊर्द्ध्वपुण्ड्रे स्थिता मुक्तिरूर्द्ध्वपुण्ड्रे स्थितो हरिः॥ ऊर्द्ध्वपुण्ड्रधरं विप्रं दृष्ट्वा पापः प्रमुच्यते। नाम स्मृत्वा तथा भक्त्या सर्व्वदानफलं लभेत्॥ ऊर्द्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति। आकल्पकोटि पितरस्तस्य तृप्ता न संशयः॥ यज्ञदानतपश्चर्य्याजपहोमादिकञ्च यत्। ऊर्द्ध्वपुण्ड्रधरः कुर्य्यात्तस्य पुण्यमनन्तकं॥ ब्रह्माण्डपुराणे। अशुचिर्व्वाप्यनाचारो मनसा पापमाचरन्। शुचिरेव भवेन्नित्यमूर्द्ध्वपुण्ड्राङ्कितो नरः। श्रुतिश्च यजुर्व्वेदस्य हिरण्यकेशीयशाखायां हरेः पदाक्रान्तिमात्मनि धारयति यं स परस्य प्रियो भर्त्ता स पुण्यवान् भवति मध्ये छिद्रमूर्द्ध्वपुण्ड्रं यो धारय

स मुक्तिभाग्भवतीति॥ ब्राह्मे। ललाटे प्रथमं दद्यात् मूर्द्ध्नि दद्यात्ततो हृदि। कण्ठे च श्रोत्रयोर्व्वाह्वोर्व्वाहुमूलद्वयेपि वा। नाभौ पृष्ठे च सन्दद्यात् पार्श्वयोश्च युगान्तथा। तिलकानि लिखेच्चैव मुच्यते सर्व्वपातकैः॥ ततो द्वादशभिः कुर्य्यान्नामभिः केशवादिभिः। द्वादशाङ्गेषु विधिवदूर्द्ध्वपुण्ड्राणि वैष्णवः। पाद्मे। ललाटे केशवं विद्यान्नारायणमथोदरे। वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके। विष्णुञ्च दक्षिणे कुक्षौ वाहौ च मधुसूदनं। त्रिविक्रमं करे तद्वत् वामनं वामपार्श्वके। श्रीधरं वामवाहौ तु हृषीकेशन्तु कन्धरे। पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत् तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि। अत्र तृतीयवचनशेषचरणे न्यसेदिति श्रवणात् शब्दमात्रभेदश्रवणाच्च केशवादीनां मन्त्रात्मकत्वमेव। ततश्च केशवमिति प्रणवादि-नमोन्त' चतुर्थ्यन्तञ्च केशवं न्यसेद्विद्यादित्यर्थः पर्य्यवस्यति एवं नारायणमित्यादौ ज्ञेयं। हरिभक्तिटीकायान्तु केशवाद्यानां दामोदरान्तानां द्वादशानां न्यासमुक्ता वासुदेवस्य न्यासमाह तदिति वासुदेवेति वासुदेवाय नम इति केचित्तु द्वादशाक्षरमन्त्रं मूर्द्ध्नि विन्यस्यन्तीति हरिभक्तिके। किरीटमन्त्रन्यासस्तु तत्रैव। एवं न्यासं समाचार्य्य सम्प्रदायानुसारतः। न्यसेत् किरीटमन्त्रञ्च मूर्द्ध्नि सर्व्वार्थसिद्धये। मन्त्रो यथा। ओँ श्रीकिरीटकेयूरहारमकरकुण्डलशङ्खचक्रगदापद्महस्तपीताम्बरधर श्रीवत्साङ्कितवक्षःस्थल श्रीभूमिसहितस्वात्मज्योतिर्दीप्तकराय सहस्रादित्य-

तेजसे नमोनम इति ॥ अथ मुद्राङ्कधारणफलं ॥ स्कान्दे । शङ्खोद्धारे तु यत् प्रोक्तं वसतां वर्षकोटिभिः । तत् फलं लिखिते शङ्खे प्रत्यहं दक्षिणे भुजे । यत् फलं पुष्करे नित्यं पुण्डरीकाक्षदर्शने ॥ शङ्खोपरि कृते पद्मे तत् फलं समवाप्नुयात् । वामे भुजे गदा यस्य लिखिता दृश्यते कलौ । गदाधरो गयापुण्यं प्रत्यहं तस्य गच्छति । यच्चानन्दपुरे प्रोक्तं चक्रस्वामिसमीपतः । गदाधोलिखिते चक्रे तत्फलं कृष्णदर्शने । ब्रह्मपुराणं । कृष्णायुधाङ्कितं दृष्ट्वा सम्मानं न करोति यः । द्वादशाब्दार्ज्जितं पुण्यं चाफलायोपगच्छति । आदित्यपुराणम् । शङ्खचक्रोर्द्ध्वपुण्ड्रादि रहितं ब्राह्मणाधमं । गर्द्दभन्तु समारोप्य राजा राष्ट्रात् प्रवासयेत् ॥ गोपीचन्दन-माहात्म्यन्तु मत्स्यसूक्ते ॥ दुर्लभं चन्दनं लोके गोपीनां विष्णुनिर्म्मितं । यत् कृत्वा तिलकं सद्यो ब्रह्महत्यां व्यपोहति । यत् येनेत्यर्थेऽव्ययं । पाद्मे । ब्रह्मघ्नो वाथ गोघ्नो वा हैतुकः सर्व्वपापकृत् । गोपीचन्दन-सम्पर्कात् पूतो भवति तत्क्षणात् । स्कान्दे । शङ्खचक्राङ्किततनुः शिरसा मञ्जरीधरः । गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः । गोपीमृत्तुलसी शङ्खः शालग्रामः सचक्रकः । गृहेपि यस्य पञ्चैते तस्य पापभयं कुतः । गारुड़े । यस्यान्तकाले खग गोपीचन्दनं बाह्वोर्ललाटे हृदि मस्तके च । प्रयाति लोकं कमलालयाप्रभोर्गोबालघाती यदि ब्रह्महा भवेत् । पाद्मे । गोपीचन्दनखण्डन्तु यो ददाति हि वैष्णवे । कुलमेकोत्तरं तेन सर्व्वमेवोद्धारितं शतं । काशीखण्डे यमः । दूताः

शृणुत यद्भालं गोपीचन्दनलाञ्छितं। ज्वलदिन्धनवत् सोपि त्याज्यो दूरे प्रयत्नतः॥ स्कान्दे। तुलसी मृत्तिकापुण्ड्रं ललाटे यस्य दृश्यते। देहं न स्पृशते पापं क्रियमाणन्तु नारद। गारुड़े। तुलसीमृत्तिकापुण्ड्रं यः करोति दिने दिने। तस्यावलोकनात् पापं याति वर्षकृतं नृणां। अत्र्य यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणं। व्यर्थमेव भवेत् सर्व्वमूर्द्ध्वपुण्ड्रं विना कृतं। ऊर्द्ध्वपुण्ड्रविहीनस्तु किञ्चित् कर्म्म करोति यः। इष्टापूर्त्तादिकं सर्व्वं निष्फलं स्यान्न संशय इति पद्मपुराणवचनात्। यत्किञ्चित् कुरुते कर्म्म विना त्रिप्रस्थि-पुण्ड्रकं। व्यर्थमेव भवेत् सर्व्वं वन्ध्यास्त्रीमैथुनं यथेति शिवधर्म्म-वचनात्। वैष्णवो वाथ शैवो वा शाक्तो वा सौर एव वा। त्रिपुण्ड्रेण विना पूजां कुर्व्वाणो नाम्भोगनिर्मिति कूर्म्म-पुराणवचनाच्च सर्व्वेषामेवोर्द्ध्वपुण्ड्रत्रिपुण्ड्रधारणं समर्थितमिति। नन्वेवमूर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं यः कुरुते स नराधमः। भङ्क्त्वा विष्णुगृहं पुण्ड्रं स याति नरकं ध्रुवमिति स्कन्दपुराणनात् ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रनिषेधस्य सच्छिद्रं कुरुते यस्तु पुण्ड्रं पाशुपतं द्विजः। धर्म्मार्थकाममोक्षेषु तस्य छिद्रं प्रजायते इति शिवधर्म्म-वचनात् त्रिपुण्ड्रोर्द्ध्वपुण्ड्रनिषेधस्य च दोषश्रुत्या रागमात्र-प्राप्तविषयत्वमेव। वैधस्य तु त्रिपुण्ड्रस्योर्द्ध्वपुण्ड्रभञ्जकत्वं ऊर्द्ध्वपुण्ड्रस्यापि त्रिपुण्ड्रछिद्रकर्त्तृकत्वमविनाभूतं न दोषायैव विधिद्वयसामर्थ्यात् विधिद्वयलङ्घने दोषातिशयश्रवणाच्च। यत्तूर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियस्तु त्रिपुण्ड्रकमिति ब्रह्मपुराण-

वचनं। वैष्णवानां ब्राह्मणानामूर्द्ध्वपुण्ड्रं विधीयते। अन्येषान्तु त्रिपुण्ड्रं स्यादिति धर्म्मो व्यवस्थित इति स्कन्दपुराणवचनाच्च तत् पूर्व्वपश्चात्करणपरत्वेन व्यवस्थेयं॥ * ॥ अथ त्रिपुण्ड्रधारणं॥ * ॥ राघवभट्ट-धृतं। भस्माग्निहोत्रसम्भूत मानयेच्छोधितं बुधः। यद्वाधरामसंस्पृष्टं सत्येनानीय गोमयं। वामेन पात्रे संस्थाप्य अघोरेण विनिर्दहेत्। तत्पुरुषेण समुद्धृत्य ईशानेन विशोधयेत्। इत्यन्तु संस्कृतं भस्म अग्निरित्यादिमन्त्रतः। विमृज्याङ्गेन संस्पृश्य पुनरादाय मन्त्रतः। तस्माद् ब्रह्मेति यजुषामन्त्रयेद्रुद्रसंख्यया। प्रणवाद्यैश्चतुर्थ्यन्तैस्त्र्यघोर-कशकैस्तथा। पञ्चवर्णाक्षरादैश्च भालांशोदरहृत्सु च। त्रिपुण्ड्रधारणं कुर्य्यान्मूर्द्ध्नि पञ्चाक्षरेण च। त्रिपुण्ड्र धारयेन्मन्त्री साक्षाच्छिव इवापरः। अस्यार्थः। सत्येन प्रणवेन। वामेनेति ओँ वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलकरणाय नमो बलप्रमथनाय नमः सर्व्वभूतदमनाय नमो मनोन्मनाय नमः। अघोरेणेति ओँ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः सर्व्वतः सर्व्वसर्व्वेभ्यो नमस्ते रुद्ररूपेभ्यः। तत्पुरुषेणेति। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। ईशानेनेति ओँ ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां। ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मेस्तु सदाशिवोम्। पश्चात्तत्र शोधनमाह अग्निरित्यादि ओँ अग्निरिति भस्मवायुरिति भस्मजलमिति भस्मस्थलमिति भस्मव्योमेति

भस्मसर्व्वंह्वा इदं भस्म मन एतानि चक्षूंषि तस्माद्व्रतमेतत् पाशुपतं यत्। मन्त्रत इति तस्माद्ब्रह्मेति मन्त्रतः। मन्त्रस्तु ओँ तस्माद् ब्रह्म तदेतत् पाशुपतं पशुपतं पशुपाशविमोक्षाय। यजुषेति यजुर्मन्त्रेण पञ्चाक्षरेण नमः शिवायेति मन्त्रेण। रुद्रसंख्ययाभिमन्त्र्य प्रणवाद्यैश्चतुर्थ्यन्तैरिति चतुर्थ्यन्तस्य प्रक्रान्तपञ्चाक्षरस्य प्रणवाद्यत्वेन षड़क्षरत्वं। तेन ओँ नमः शिवायेति मन्त्रैर्भालांशोदरहृत्सु तिलक-पञ्चकं कुर्य्यादित्यर्थं। पक्षान्तरमाह अघोरकैशकैरिति ईशक ईशानमन्त्रः। एतन्म-न्त्रद्वयेनेति। अन्यत्पक्षान्तरमाह। पञ्चेति षड़क्षर-मन्त्रा-द्यक्षरैः प्रणवः सर्व्वत्र बहुवचनं तिलकपञ्चके मन्त्रावृत्ति-ज्ञापनार्थं। भस्म-शोधनमन्यदप्युक्तं। वायवीयसंहितायां। यथा शिवाग्नेर्भस्म संग्राह्य मग्निहोत्रोद्भवन्तु वा। वैवाह्याग्नुग-द्भवं वापि पक्वं शुचि सुगन्धि च। कपिलायाः शकृच्छुद्धं गृहीतं गगने पतत्। न क्लिन्नं नापि कठिनं न दुर्गन्धि न चोषितं। उपर्य्यधः परित्यज्य गृह्णीयात् पतितं यदि। पिण्डीकृत्य शिवाग्नौ तु प्रक्षिपेन्मूलमन्त्रतः। अपक्वमतिपक्वञ्च संत्यज्याभ्रमितं सितं। आदाय यस्माच्छुद्धं तद्यथा भस्म प्रजायत इति भस्मशोधनं। उषितं पर्य्युषितमित्यर्थः। अपक्वं ईषत्पक्वं अतिपक्वञ्च मितम्बा अम्बु संत्यज्य अर्थाज्जल-योगं विना आदाय तिलकं कुर्य्यादित्यर्थः। जलसंयोगाभावे हेतुमाह यस्मादिति। कालाग्नि-रुद्रोपनिषत् यथा त्रिपुण्ड्रं भस्मना करोति योविद्वान् ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्व्वा

स महापातकोपपातकेभ्यः पूतो भवति स सर्व्वेषु तीर्थेषु स्नातो भवति स सर्व्वान् देवान् ध्यातो भवति स सर्व्वान् वेदानधीतो भवति स सकलरुद्रमन्त्रजापी भवति स सकलान् भोगान् भुङ्क्ते देहं त्यक्त्वा शिवसायुज्यमाप्नोति न स पुनरावर्त्तते इत्याह भगवान् कालाग्निरुद्रोयस्त्वेतद्वा अधीते सोप्येवमेव भवतीत्योम् सत्यं॥ त्रिपुण्ड्र-धारण-फलं॥ पुरश्चरण लहरीतन्त्रे। ब्रह्मचारी गृहस्थो वा वनस्थो यतिरेव वा। महापातक-संघातैर्मुच्यते सर्व्वपातकैः। अमन्त्रेणापि यः कुर्य्याद्‌ज्ञात्वा महिमोन्नतिं। त्रिपुण्ड्रं भालफलके मुच्यते सर्व्वपातकैः। रुद्राक्षो यस्य देहेषु ललाटे च त्रिपुण्ड्रकं। स चाण्डालोपि विज्ञेयः सर्व्ववर्णोत्तमोत्तमः। यानि तीर्थानि लोकेऽस्मिन् गङ्गाद्याः सरितस्तथा। स्नातो भवति सर्व्वत्र यल्ललाटे त्रिपुण्ड्रकं। सप्तकोटि महामन्त्रा उपमन्त्रास्तथैव च। श्रीविष्णोः कोटिमन्त्राश्च कोटिमन्त्राः शिवस्य च। ते सर्व्वे तेन जप्ताः स्युर्य्यो बिभर्त्ति त्रिपुण्ड्रकं। सहस्रं पूर्व्वजातानां सहस्रञ्च जनिष्यतां। स्ववंशजानां मर्त्यानामुद्धरेद्यस्त्रिपुण्ड्रधृक्। अष्टैश्वर्य्यगुणोपेतः प्राप्य दिव्यं वपुः ततः। दिव्यं विमानमारुह्य दिव्यस्त्रीशतसेवितः। विद्याधराणां सिद्धानां गन्धर्व्वाणां महौजसां। इन्द्रादिलोकपालानां लोकेषु च यथाक्रमं। भुक्त्वा भोगान् सुविपुलान् प्रजेशानां पुरेषु च। ब्रह्मणः पदमासाद्य तत्र कल्प-शतं वसेत्। विष्णोर्लोके च रमते आब्रह्मण-शतायुषं। शिवलोकं ततः प्राप्य रमते

कालमक्षयं। शिवसायुज्यमाप्नोति न स भूयोऽभिजायते। शिवधर्म्मे। सितेन भस्मना कुर्य्याल्ललाटे च त्रिपुण्ड्रकं। सर्व्व-पापविनिर्म्मुक्तः शिवलोके महीयते। सर्व्वे त्रिपुण्ड्रकं कुर्य्युः सर्व्वदा यज्ञभस्मना। तदभावे चन्दनेन मृदा वा वारिणापि वा॥ अथ शाक्त तिलकं॥ शाक्तानन्दतरङ्गिणीधृतगौतमीये। तिलकं रक्तगन्धेन चन्दनेनाथ वा प्रिये। देव्यस्त्वं विलिखेद्भाले तारावीजं ततो हृदि। शक्तिमध्यगतं कुर्य्यादित्येतच्छाक्त तिलकं। देव्यस्त्वमिति स्वीयेष्टदेवतास्त्वपरं। तारावीजं श्रीँ शक्तिवीजं ह्रीँ इति कालीहृदय-विद्योद्धारे। प्रका-रान्तरमन्नदाकल्पे। प्रक्षाल्य पाणी पादौ च रक्तवस्त्र-युगन्ततः। परिधायोर्द्ध्वचन्द्राभं सविन्दुतिलकं चरेत्। चन्दनेन सुरक्तेन कुङ्कुमेनाथवा पुनः। सिन्दूरविन्दुसंयुक्तं रेखात्रयविराजितं। देवीपादाम्बुजरजो ध्यात्वा मूलेन साधकः। पूजाधिकारी दुर्गाया यथासौ चन्द्रशेखरः। अत्रैव विशेषो यथा। कृष्णाच्चनचन्द्रिकाधृतमालिनीविजये। भाले चन्द्राङ्करेखात्रितयविरचितं विद्युदाभाविलासं, तस्याध-स्तान्तरालेऽरुणाकिरणनिभं भ्रूयुगस्यार्थविन्दुं। हृन्मध्ये पद्म-रूपं शशधर-विशदं दोर्युगे वीरणाभं, स्थानेष्वन्येषु विन्दून् रचयति तिलकं सोऽपि विश्वेशरूपः। भ्रूयुगस्यान्तराले मध्ये रक्तवर्णं विन्दुं रचयति, हृन्मध्ये श्वेतपद्मरूपं, दोर्युगे वाहुयुग्मे वीरणाभं॥ * ॥ अथ मालाधारणं॥ हरिभक्तिके। ततः कृष्णार्पितां मालां धारयेत्तुलसीदलैः। पद्माक्षैस्तुलसीकाष्ठैः

फलैर्धात्र्याश्च निर्म्मिताः। धारयेत्तुलसीकाष्ठ-भूषणानि च वैष्णवः। मस्तके कर्णयोर्व्वाह्वोः करयोश्च यथारुचि। स्कान्दे॥ सन्निवेद्यैव हरये तुलसीकाष्ठसम्भवां। मालां पश्चात् स्वयं धत्ते स वै भागवतोत्तमः॥ हरये नार्पयेद्यस्तु तुलसीकाष्ठसम्भवां। मालां धत्ते स्वयं मूढ़ः स याति नरकं ध्रुवं॥*॥ अथ तुलसीमालासंस्कारः॥*॥ तत्रैव। क्षालितां पञ्चगव्येन मूलमन्त्रेण मन्त्रितां। गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेच्च तां॥ विधिवत् परया भक्त्या सद्योजातेन पूजयेत्। तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये॥ विभर्म्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभं। यथा त्वं वल्लभा विष्णोर्नित्यं विष्णुजनप्रिया॥ तथा मां कुरु देवेशि नित्यं विष्णुजनप्रियं। दाने ला धातुरुद्दिष्टो लासि मां हरिवल्लभा॥ भक्तेभ्यश्च समस्तेभ्यस्तेन माला निगद्यसे। एवं संप्रार्थ्य विधिवत् मालां कृष्ण-गलेऽर्पितां॥ धारयेद्वैष्णवो यो वै स गच्छेत् वैष्णवं पदं॥ स्कान्दे। धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि। वैष्णवो न स विज्ञेयो विष्णुपूजारतो यदि॥ न जह्यात्तुलसीमालां धात्रीमालां विशेषतः। महापातकसंहर्त्रीं धर्म्मकामार्थदायिनीं॥ गारुड़े। धारयन्ति न ये मालां तुलसीकाष्ठसम्भवां। नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः॥ हैतुकाः पापबुद्धय इति द्वितीयचरणे पाठान्तरं। अगस्त्यसंहितायां। निर्म्माल्यतुलसीमालायुक्तो यश्चार्चयेद्धरिं। यद्यत् करोति तत् सर्व्वमनन्तफलदं भवेत्॥

नारदीये । ये कण्ठलग्नतुलसीनलिनाक्षमाला, ये वा ललाट-फलके लसदूर्द्ध्वपुण्ड्राः । ये वाहुमूलपरिचिह्नितशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ विष्णुधर्म्मोत्तरे । तुलसी-काष्ठमालाञ्च कण्ठस्थां वहते तु यः । अप्यशौचोऽप्यनाचारो मामेवैति न संशयः ॥ मां विष्णुं ॥ स्कान्दे । धात्रीफल-कृता माला तुलसीकाष्ठसम्भवा । दृश्यते यस्य देहे तु स वै भागवतोत्तमः ॥ तुलसीदलजां मालां कण्ठस्थां वहते तु यः । विष्णूत्तीर्णां विशेषेण स नमस्यो दिवौकसां ॥ तुलसीदलजा माला धात्रीफलकृतापि च । ददाति पापिनां मुक्तिं किं पुनर्विष्णुसेविनां ॥ यः पुनस्तुलसीमालां कृत्वा कण्ठे जनार्द्दनं । पूजयेत् पुण्यमाप्नोति प्रतिपुष्पं गवायुतं ॥ स्पृशेच्च यानि रोमाणि धात्रीमाला कलौ नृणां । तावद्वर्षसहस्राणि वसते केशवालये ॥ यावद्दिनानि वहते धात्रीमालां कलौ नरः । तावद्युगसहस्राणि वैकुण्ठे वसति ध्रुवं ॥ मालायुग्मञ्च यो नित्यं धात्रीतुलसीसम्भवं । वहते कण्ठदेशे तु कल्पकोटीर्दिवं वसेत् ॥ गारुड़े । तुलसीदलजां मालां कृष्णोत्तीर्णां वहेत्तु यः । पदे पदेऽश्वमेधानां दशानां लभते फलं ॥ तुलसीकाष्ठ-सम्भूतां यो मालां वहते नरः । फलं यच्छति दैत्यारिः प्रत्यहं द्वारकोद्भवं ॥ निवेद्य विष्णवे मालां तुलसीकाष्ठसम्भवां । वहते यो नरो भक्त्या तस्य वै नास्ति पातकं ॥ सदा प्रीतमना-स्तस्य कृष्णो देवकीनन्दनः । तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ॥ प्रायश्चित्तं न तस्यास्ति नाशौचं तस्य विग्रहे ।

तुलसीकाष्ठसम्भूतं शिरसो यस्य भूषणं ॥ बाह्वोः करे च मर्त्त्यस्य देहे तस्य सदा हरिः। तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् ॥ पितॄणां देवतानाञ्च कृतं कोटिगुणं कलौ। तुलसीकाष्ठमालान्तु प्रेतराजस्य दूतकाः॥ दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा दलं। तुलसीकाष्ठमालाभिर्भूषितो भ्रमते यदि ॥ दुःस्वप्नं दुर्निमित्तञ्च न भयं शस्त्रजं क्वचित् ॥

॥ * ॥ अथ रुद्राक्षमाहात्म्यं ॥ * ॥ धर्म्मपुराणे रुद्राक्षाधिकारे। लक्षन्तु दर्शनात् पुण्यं कोटिर्वै स्पर्शनेषु च। दशकोटिशतं पुण्यं धारणाल्लभते नरः। दर्शनाद्यनन्तरं कृतपुण्यकर्म्मणां लक्षादिपरिमितफलाधिक्यमित्यर्थः। धारणे फलविशेषस्तत्रैव। हस्ते शिरसि कण्ठे वा रुद्राक्षं धारयेद्यदि। अवध्यः सर्व्वभूतानां रुद्रवद्विचरेद्भुवि ॥ सुराणाञ्चैव सर्व्वेषां वन्दनीयो यथा हरिः। तथैव सर्व्वलोकेशो ब्रह्मा चास्यैव धारणात् ॥ उच्छिष्टो वा विकर्म्मस्थो युक्तो वा सर्व्वपातकैः। मुच्यते सर्व्वपापेभ्यो रुद्राक्षधारणेन च ॥ कण्ठे रुद्राक्षमादाय श्वापदो म्रियते गुह। सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानुषादयः॥ ध्यानधारणहीनोऽपि रुद्राक्षं यदि धारयेत्। सर्व्वपापविनिर्म्मुक्तः स याति परमां गतिं ॥ एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति। तस्मात्तं धारयेद्देहे सर्व्वपापक्षयाय च ॥ शिवलोकं स गच्छेत्तु शिवेन सह मोदते। शिवसायुज्यमामेति न च्युतः शिववेश्मनः॥ महता पुण्ययोगेन हरानुग्रहकारणात्। एकवक्त्रं लभेन्मर्त्त्यो मोक्षमार्गं षडानन ॥ देव-

देव द्विवक्त्रन्तु यस्तु धारयते नरः। सर्व्वपापक्षयं याति यत् कृतं गोवधादिकं ॥ स्वर्गञ्चाक्षयमाप्नोति द्विवक्त्रधारणान्नरः। त्रिवक्त्रान्त्वनलः साक्षाद्देहे यस्य प्रतिष्ठितः ॥ तस्य जन्मार्ज्जितं पापं दहत्यग्निरिवेन्धनं। स्त्रीहत्या भ्रूणहत्या च बहूनां जन्तुहत्यया ॥ यत्पापं लभते मर्त्यः सर्व्वं नश्यति तत्क्षणात् । त्रिवक्त्रो धार्य्यते येस्तु स च ब्रह्मसमो भुवि ॥ स्वर्गलोके सुरैः पूज्यः पुण्यात् पुण्यतमो भुवि। नचोदरे भवेद्रोगो न चैवापदतां व्रजेत् ॥ पराजयं लभेन्नैव न चाग्निर्दह्यते गृहं। एतान्यन्यानि सर्व्वाणि वज्रादेश्च निवारणं ॥ नाशुभं विद्यते किञ्चित् त्रिवक्त्रस्य च धारणात् । चतुर्वक्त्रः स्वयं ब्रह्मा यस्य देहे प्रतिष्ठति ॥ स भवेत् सर्व्वशास्त्रज्ञो द्विजो वेदविदां वरः। यत्पापं गुरुहत्यायां पुरुषाणां वधेषु च ॥ तत्सर्व्वं दहते शीघ्रं चतुर्वक्त्रस्य धारणात् । महेशस्तुष्यते नित्यं भूतानामधिपो भवेत् ॥ सद्योजातः सदेशानस्तत् पुरुषो घोर एव च। वामदेव इमे पञ्चवक्त्रैः पञ्चभिराश्रिताः ॥ अतः सर्व्वेषु भूयिष्ठः पञ्चवक्त्रो धरातले। रुद्रस्य निजरूपोऽयं तस्मात्तं धारयेद्बुधः ॥ कल्पकोटिसहस्राणि महापद्मानि यानि च। तावत् कालं शिवस्याग्रे पूजनीयः सुरासुरैः। सार्व्वभौमो भवेद्भूमौ तेजोराशिरिवोदयः। तस्मात् सर्व्वप्रयत्नेन पञ्चवक्त्रं प्रधारयेत्। षड्वक्त्रं कार्त्तिके यस्तु धारयेद्दक्षिणे-भुजे। ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः। स्कन्दस्य सदृश. शूरः कल्पान्ते समुपस्थिते। न पराजयतामिति

गुणानामाकरो भुवि। कुमारत्वं सदा तस्य यथा गौर्य्यास्तु नन्दनः। ब्राह्मणो नृपपूज्यश्च क्षत्रियो लभते महीं। वैश्य-शूद्रादयो वर्णाः सदैश्वर्य्यप्रपूजिताः। तस्यैव वरदा देवी मातेव सुलभा भवेत्। ततो भुजबलादेव रिपुजेता भवेन्नृप। वाग्मी धीरः सभायाञ्च नृपवेश्मनि संसदि। नच कातरतामेति नैव भङ्गो भवेद्ध्रुवं। एवमन्यानि सर्व्वाणि षड्वक्त्रस्यैव धारणात्। सप्तवक्त्रो महासेन अनन्तो नाम नागराट्। यस्य प्रत्येकवक्त्रे तु प्रति नाम व्यवस्थितः। अनन्तश्च कर्कोटश्च पुण्डरीकोऽथ तक्षकः। विषोल्वणः कालीयश्च सुमाख्यश्चैव सत्तमः। एते नागा महावीर्य्याः सप्तवक्त्रे व्यवस्थिताः। अस्य धारणमात्रेण विषं न क्रमते तनौ। हरस्य परमप्रीतिः सर्व्वनागेश्वरो यथा। प्रीत्या च सर्व्वपापानि क्षयं यान्ति दिने दिने। ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। यत्पापं लभते मर्त्त्यः सर्व्वं नश्यति तत्क्षणात्। शिवस्य सदृशं भोग्यं त्रैलोक्ये निखिलं भवेत्। अष्टवक्त्रो महासेनः साक्षाद्देवो विनायकः। अस्यैव धारणाद्देव यत् पुण्यं तच्छृणुष्व मे। जन्मजन्मनि मूर्खो न नातुरो न च दुष्टधीः। अविघ्नं सर्व्व-कार्य्येषु तस्यैव सततं भवेत्। अक्षयं त्रिदिवं भुक्त्वा मुक्तो याति परां गतिं। गुणाश्चैतानि सर्व्वाणि अष्टवक्त्रस्य धारणात्। नवमं भैरवं प्रोक्तं धारयेद्वामबाहुतः। कापिलं मुक्तिदं धृत्वा मम तुल्यबलो भवेत्। लक्षकोटिसहस्राणि ब्रह्महत्या-दिकानि च। तत् पापं दहते शीघ्रं नववक्त्रस्य धारणात्।

सुरलोके सदा देवैः पूजितो मघवा यथा। हरवद्धरवेश्मस्थो गणेशो नात्र संशयः। दशवक्त्रो महासेनः साक्षाद्देवो जनार्द्दनः। ग्रहाश्चैव पिशाचाश्च वेताला ब्रह्मराक्षसाः। पुन्नागाश्चैव नश्यन्ति दशवक्त्रस्य धारणात्। वक्त्रैरेकादशैर्व्वृत्स रुद्रा एकादश स्मृताः। शिखायां धारयेन्नित्यं तस्य पुण्यफलं शृणु। अश्वमेधसहस्राणि यज्ञकोटिशतानि च। गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलं। तत्फलं समवाप्नोति वक्त्रैकादशधारणात्। हरस्य सदृशो लोके पुनर्जन्म न विद्यते। रुद्राक्षं द्वादशैर्व्वक्त्रैः कण्ठदेशे तु धारयेत्। आदित्यस्तुष्यते नित्यं द्वादशार्को व्यवस्थितः। गोमेधं नरमेधञ्च कृत्वा यत् फलमश्नुते। तत्फलं शीघ्रमाप्नोति वज्रादेश्च निवारणं। न चाग्निता भयं तस्य न च व्याधिः प्रवर्त्तते। अर्थलाभः सुखञ्चैव ईश्वरो न दरिद्रता। हस्त्यश्वमृगमार्जारमूषिकान् कुकरांस्तथा। कृमि दंष्ट्रि-शृगालादीन् हत्वा वनचराण्यपि। मुच्यते नात्र सन्देहो वक्त्रद्वादशधारणात्। वक्त्रैस्त्रयोदशैर्युक्तो रुद्राक्षः प्राप्यते यदि। अष्टमासैस्तु विज्ञेयः सर्व्वकामफलप्रदः। मुच्यते सर्व्वपापेभ्यस्त्रयोदश-विधारणात्। अक्षयं लभते स्वर्गं यथा देवो महेश्वरः। वक्त्रैश्चतुर्द्दशैर्युक्तं रुद्राक्षं यदि धारयेत्। सततं मूर्द्धि वाहो वा शक्तिपिण्डः शिवस्य सः। किंपुनर्बहुनोक्तेन विस्मितेन पुनः पुनः। पूज्यते सततं देवैर्यथा देवो महेश्वरः। शृणु यन्मुखतत्त्वेन वक्त्रे वक्त्रं यथाविधिः। ओँ मन्त्रोच्चारणादेव गुणाह्येते प्रकीर्त्तिताः।

यः पुनर्म्मन्त्रयुक्तान्तु धारयेद्भुवि मानवः। गुणास्तस्य महत्त्वाच्च वर्णितुं नैव शक्यते। शिरसा रुद्रमालान्तु गृहीत्वा यो व्रजेन्नरः। पदे पदेऽश्वमेधस्य फलमाप्नोति नान्यथा। धारयित्वा च रुद्राक्षं म्रियते यः क्षितौ नरः। स याति मत्पुरं रम्यं सर्व्वदेवैः प्रपूजितः॥ अथ रुद्राक्षशोधनं॥ * ॥ शिवरहस्ये। पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत्। रुद्राक्षस्य प्रतिष्ठायां मन्त्रः पञ्चाक्षरः स्मृतः। त्र्यम्बकादिकमन्त्रञ्च तथा तत्र प्रयोजयेत्। त्र्यम्बकादिकमन्त्रस्तु। ओँ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनं उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् ओँ। तथा हुँ हुँ अनेन मन्त्रेण रुद्राक्षस्य द्विजोत्तमः। प्रतिष्ठां विधिवत् कुर्य्यात्ततोऽधिकफलं लभेत्। तथा। विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः। स याति नरकान् घोरान् यावदिन्द्राश्चतुर्द्दश॥ निर्णयसिन्धौ प्रजापतिः। सप्तविंशतिरुद्राक्षमालया देहसंस्थया। यत् करोति नरः पुण्यं सर्व्वं कोटिगुणं भवेत्। यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि षण्मुख। तस्य प्रीतो भवेद्रुद्रः स्वपदञ्च प्रयच्छति। विष्णुधर्म्मोत्तरे। अरुद्राक्षधरो भूत्वा यद्यत् कर्म्म च वैदिकं। करोति जपहोमादि तत् सर्व्वं निष्फलं भवेत्॥ * ॥ अथाचमनं॥ * ॥ षट्‌त्रिंशन्मतं। अन्तर्जानुशुचौ देशे उपविश्य उदङ्मुखः। प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्। दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः। त्रिराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनं।

मदनपारिजाते यमः। तावन्नोपस्पृशेद्विप्रो यावद्वामेन न स्पृशेत्। वामे हि द्वादशादित्या वरुणश्च जलेश्वरः। गङ्गा वसति चाङ्गुष्ठे तर्जन्यां यमुना नदी। मध्यमे नर्म्मदा चैव सिन्धुश्चैव अनामिके। कनिष्ठे गोमती देवी मध्ये तिष्ठति सागरः। षट्तीर्थकमिदं पुण्यं ब्राह्मणस्य करे स्थितं। ततश्च वामहस्ते जलस्थापनं विना आचमनं न कार्य्यमिति। तत्रैव। शुष्केन वाससा तोये नाचामेच्च विचक्षणः। जानोरूर्द्धं जलं गत्वा स्थानाभावादुपस्पृशेत्॥ न वर्षवारिष्वाचामेत् तथाल्प-प्रदरोदके। आर्द्रेण वाससा चैव स्थलेनोपस्पृशेत् द्विजः। यद्याचामेत् कदाचित्तु निम्नं गत्वा परिप्लुतः। क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः। भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः। वौधायनः। ओँ पूर्व्वाभिर्व्याहृतिभिः सर्व्वपातकेष्वाचामेत्। यत् पूर्व्वमाचामति तेन ऋग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदं यत्प्रथमं संमार्ष्टि तेनाथर्ववेदं यत् द्वितीयं तेनेतिहासपुराणादीन् यत्सव्यं पाणिं प्रोक्षते पादौ शिरश्च तेनोपनिषदः प्रीणन्ति यन्मुखवाहु-शिरोहृदयं चक्षुःकर्णनासिकानाभिश्चोपस्पृशते तेनौषधिवन-स्पतयः सर्व्वा देवताः प्रीणन्ति तस्मादाचमनादेव सर्व्वस्मात् पापात् प्रमुच्यते। काशीखण्डे। भूर्भुवःस्वस्त्रिभिर्म्मन्त्रैः प्रणवाद्यैः सदा द्विजः। त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः। ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम। गङ्गा च यमुना चैव प्रीयेते परिमार्ज्जनात्। नासत्यदस्रौ प्रीयेते

स्पृष्टे नासापुटद्वये । स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ । कर्णयुग्मे तथा स्पृष्टे प्रीयेते ह्यनिलानलौ । नाभिस्पर्शे तथा ब्रह्मा प्रीयते हृदि केशवः । मूर्द्धः संस्पर्शनात् तस्य प्रीतस्तु पुरुषोत्तमः । बाह्वोः संस्पर्शनादेव प्रीयन्ते सर्व्वदेवताः । मदनपारिजाते यमः । गङ्गा च दक्षिणे कर्णे नासिकायां हुताशनः । उभयोः स्पर्शनेनैव तत्क्षणादेव शुध्यति । हरिभक्तिविलासे विष्णुपुराणं । त्रिः केशवं नारायणं माधवमप्यथाचामेत् । प्रक्षालने द्वयोः पाण्योर्गोविन्दं विष्णुमित्युभौ । मधुसूदनमेकञ्च मार्जनेऽन्यत् त्रिविक्रमं । उन्मार्जनेप्यधरयोर्वामन-श्रीधरावुभौ । प्रक्षालने पुनः पाण्यो हृषीकेशञ्च पादयोः । पद्मनाभं प्रोक्षणे तु मूर्द्धि दामोदरन्ततः । वासुदेवं मुखे सङ्कर्षणं प्रद्युम्नमित्युभौ । नासयोर्नेत्रयुगलेऽनिरुद्ध पुरुषोत्तमं । अधोक्षजं नृसिंहञ्च कर्णयोर्नाभितोऽच्युतं जनार्द्दनञ्च हृदये उपेन्द्रं मस्तके ततः । दक्षिणे तु हरिं बाह्वे वामे कृष्णं यथाविधि । नमोन्तञ्च चतुर्थ्यन्तमा[illegible]त् क्रमतो जपन् ॥ * ॥ गाणपत्याचमनं ॥ गणेशार्च्चनचन्द्रिकायां । यथा— ओँ गणेशाय स्वाहा ओँ ढुण्ढिराजाय स्वाहा ओँ त्र्यम्बकाय स्वाहेति त्रिर्जलं पीत्वा हस्तौ प्रक्षाल्य यथाक्रमं ओष्ठादि मार्ज्जनं कुर्य्यात् ॥ * ॥ अथ तान्त्रिकाचमनं ॥ * ॥ यामले आत्मविद्याशिवैस्तत्त्वैराचामेत् साधकाग्रणीः । वह्निजाय परे दत्वा शुद्धेन पाथसा प्रिये । पाथसा जलेन । तन्त्रान्तरे आत्मविद्याशिवैस्तत्त्वैः स्वाहान्तैस्त्रिः पिवेदपः । ओँ ह्रीँ हुम

दिभिः शैवे शाक्ते वाग्बीजपूर्व्वकं। मालिनीतन्त्रे। आचा-
मेदात्मतत्त्वाद्यैः प्रणवाद्यैर्हिठान्तकैः। तेन शैवे ओँ ह्रां
आत्मतत्त्वाय स्वाहा ओँ ह्रीँ विद्यातत्त्वाय स्वाहा ओँ ह्रुँ
शिवतत्त्वाय स्वाहेति मन्त्रैस्त्रिरपः पीत्वा ओष्ठादिमार्ज्जनं
कुर्य्यात्। शाक्ते तु ओँ ऐँ आत्मतत्त्वाय स्वाहा ओँ ऐँ विद्या-
तत्त्वाय स्वाहा ओँ ऐँ शिवतत्त्वाय स्वाहेति त्रिरपः पीत्वाचामेत्
॥ * ॥ अथ देवपूजा ॥*॥ प्रपञ्चसारे। आसनं स्वागतं पाद्य-
मर्घ्यमाचमनीयकं। मधुपर्काचमनं स्नानवसनाभरणन्तथा।
सुगन्धसुमनोधूपदीपनैवेद्यवन्दनं। प्रयोजयेदर्च्चनायामुप-
चारांश्च षोड़श ॥ * ॥ अथासनं कालिकापुराणे ॥ * ॥ आसनं
प्रथमं दद्यात् पौष्पं दारवमेव वा। वास्त्रं वा चार्म्मणं कौशं
रौप्यं सौवर्णमेव वा ॥ १ ॥ अथ स्वागतं शारदायां॥ स्वागतं
कुशलप्रश्नं निगदेदग्रतो गुरोः। गुरोरिति देवोपलक्षणं ॥ २ ॥
अथ पाद्यं उत्कलखण्डे। पादपद्मद्वये दद्यात् पाद्यं श्यामाक-
पङ्कजैः। कालिकापुराणे। पादार्थमुदकं पाद्यं केवलन्तोय-
मेव तत्। तत्तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ॥ ३ ॥
अथार्घ्यं। प्रपञ्चसारे। गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः।
दूर्व्वाश्चेति [illegible] रितं। स्कान्दे। यव-
दूर्व्वाकुशाग्रैश्च फलमिश्रार्घ्यकैस्तिलैः। तत्र शेषं क्षिपेद्भूमौ
एषोऽर्घ्यविधिरीरितः ॥ ४ ॥ अथाचमनीयं। आगमे। जाती-
लवङ्गकक्कोलैर्निर्म्मिताचमनीयकं। स्कन्दपुराणे। जातीफलेन
कक्कोललवङ्गैः संस्कृतं जलं। दद्यादाचमनार्थं तु मधुपर्कं

ततो ददेत् ॥ ५ ॥ * ॥ अथ मधुपर्कः ॥ मधुपर्कं ददेदित्यु-
क्रम्य । तत्रैव । मधुसर्पिर्युतं गव्यं दधि कांस्ये हि निर्म्मले
पात्रे स्थितञ्च पिहितं पात्रेणान्येन तादृशा । शारदायां
आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ॥ ६ ॥ पुनराच
मनीयं ॥ आगमे । शुद्धाभिरद्भिर्विहितं पुनराचमनीयकं
विष्णुधर्म्मोत्तरे । तीर्थतोयं ततो दत्त्वा देवस्याचमनं पुनः ॥७
अथ स्नानं । एकादशस्कन्धे । चन्दनोषीर-कर्पूर-कुङ्कुमा-
गुरुवासितैः । सलिलैः स्नापयेन्मन्त्री नित्यञ्च विभवे सति ।
उत्कलखण्डे । सुसंस्कृतं फलयुतं स्नापने जलमुच्यते ।
जलपरिमाणं भविष्ये । स्नाने शतपलं दद्यादभ्यङ्गे पञ्च-
विंशतिं । पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितं ॥ ८ ॥
॥ * ॥ अथ वस्त्रं । स्कन्दपुराणे । पट्टकौषेय-कार्पास निर्म्मिते
वाससी शुभे । यथाशक्ति प्रदेये च वित्तशाठ्यं न कारयेत् ॥
कालिकापुराणे । रक्तं कौषेयवस्त्रञ्च महादेव्यै प्रशस्यते ।
कार्पासं सर्व्वतोभद्रं दद्यात् सर्व्वेभ्य एव तत् । [illegible]तन्त्रे ।
षट्त्रिंशदङ्गुलान्यूनायामं वस्त्रं न चार्पयेत् । विभवे सति
देवेशि काम्ये कर्म्मणि कुत्रचित् ॥ ९ ॥ अलङ्कारोपि तत्रैव ।
अष्टवर्षीयकन्याया नोपभुक्तं भवेत्तु यत् । अलङ्कारं न दद्याच्च
वित्तशाठ्यं विवर्जयेत् । उत्कलखण्डे । हार-केयूर मुकुट
ग्रैवेयादिक-भूषणं । यथाशक्ति यथास्थानं देवस्याङ्गे निवे-
शयेत् । कालिकापुराणे । शिरोगतानि दद्याच्च सौवर्णानि च
सर्व्वदा । चड़ारत्नादिकानीह भूषणानि तु भैरव । ग्रैवेयकादि-

नाभ्यन्तं सौवर्णं राजतञ्च वा। निवेदयेत्तु देवेभ्यो नान्यत्तैजस-सम्भवं। देवोद्देशे रौप्यञ्च न कदाचिद्विभूषणं॥ १०॥
अथ गन्धः। तत्रैव। सर्व्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः। तस्मात् सर्व्वप्रयत्नेन दद्यान्मलयजं सदा। कृष्णागुरुः सकर्पूरः सहितोमलयोद्भवैः। वैष्णवीप्रीतिदोगन्धः कामाख्यायाश्च भैरव। देवीपुराणे। मदकर्पूर-काश्मीर रोचनानाञ्चतुष्टयं। एतेन लेपयेद्देवीं सर्व्वान् कामानवाप्नुयात्। स्कान्दे। चन्द्र-चन्दन-कस्तूरी कुङ्कुमैरनुलेपनं। चन्द्रः कर्पूरं। प्रपञ्चसारे। चन्दनागुरुकर्पूर-पङ्कं गन्धमिहोच्यते॥ अथ गन्धाष्टकं॥ सारदातन्त्रे॥ चन्दनागुरुकर्पूर-रोचना कुङ्कुमं मदं। रक्तचन्दन-जावासं गाणपत्यमुदाहृतं। जावासो दुरालभा इति गणेश-गन्धाष्टकं॥ ह्रीवेरं चन्दनं कुष्ठमगुरुश्चन्दनं मुरा। सेव्यकञ्च जटामांसी वैष्णवं तदुदाहृतं। ह्रीवेरं गन्धवाला सेव्यकं गोरोचना। इति विष्णुगन्धाष्टकं॥ चन्दनागुरुकर्पूर-जल-कुङ्कुम-रोचना। जटामांसी कपियुता शाक्तं गन्धाष्टकं विदुः। जलं गन्धवाला। कपियुता गाठियान्॥ इति शाक्तगन्धाष्टकं॥ जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः। उशीरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुः। काश्मीरं कुङ्कुमं उशीर गन्धविर्णा। इति सूर्य्यगन्धाष्टकं। चन्दनागुरुकर्पूर-तमालजल-कुङ्कुमं। कुशीदं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः। कुशीदं रक्तचन्दनं। इति शैवगन्धाष्टकं॥ ११॥ अथ पुष्पाणि॥ देवीपुराणे। पुष्पमूले वसेत् ब्रह्मा पुष्पमध्ये च केशवः। पुष्पाग्रेऽहं स्थितो

नित्यं सर्व्वे देवाः स्थिता दले। चराचराश्च सकलाः सदा पुष्पवशाः स्मृताः। परं ज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति। त्रिवर्गसाधनं पुष्पं तुष्टिश्चोपुष्टिवर्द्धनं। पुष्पैर्देवी प्रसन्ना स्यात् धर्म्मकामार्थदायिनी। तस्मात् पुष्पैर्यजेद्देवीं नित्यं भक्तियुतो नरः। सर्व्वासां पुष्पजातीनां रक्तं शस्तं तथा जवा। देवीप्रीतिकरं प्राज्ञे सर्व्वकामफलप्रदं। रक्तपुष्पञ्च देवेशि तथा स्वर्णादिनिर्म्मितं। रक्तपद्मेन वज्रेण तुलां न याति कर्हिचित्। वज्रेण हीरकेणेत्यर्थः। न सुवर्णेन रत्नेन नच चित्रेण भूरिणा। तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः। स्कान्दे। तेनार्च्चितोऽहं सुभगे कल्पं वर्षायुतं शुभं। प्रत्यहं कुसुमैकेन भक्त्या येनार्च्चितो हरिः। शैवसर्व्वस्वे। तपः-शीलगुणोपेते ब्राह्मणे वेदपारगे। दत्त्वा दश सुवर्णस्य तत् फलं कुसुमस्य च। मन्त्रतन्त्रप्रकाशे। पुष्पं पञ्चविधं प्रोक्तं मुनिभिर्नारदादिभिः। परापरोत्तमञ्चैव मध्यमञ्च तथाधमं। सौवर्णन्तु परं प्रोक्तमपरं चित्रवस्त्रकं वृक्ष-गुल्मलतापुष्पमुत्तमं परिकीर्त्तितं। अधमं पत्रतोयादि मध्यमन्तु फलात्मकं। उत्सृष्टं न क्रियायोग्यं सदा योग्ये परापरे। उत्सृष्टं देवाय दत्तमिति। अर्थादुत्तमादि त्रिविध-पुष्पं न पुनः क्रियायोग्यं किन्तु भूषणार्थं देवोपरि धार्य्य-मित्यर्थः। नचैवं "दूषिताः पशवो बद्धाः कन्यका च रजस्वला। देवता च सनिर्म्माल्या हन्ति पुण्यं पुराकृतमिति" स्मृतेः परापरपुष्पेऽपि तद्दोषः स्यादिति वाच्यं। यावच्चन्द्रश्च सूर्य्यश्च

यावत्तिष्ठन्ति देवताः। न निर्म्माल्यं भवेत्तावत् स्वर्णरूप्य-विभूषणमिति तत्त्वसारवचने नात्र निर्म्माल्यत्वाभावात्। आचारादर्शे। आरामोत्पादितं पुष्पमारण्यं क्रीतमेव च। तथा प्रतिग्रहाल्लब्धं पुष्पमेतच्चतुर्विधं। क्रीतमिति वीरक्रय-क्रीतं। तथा च ब्रह्मपुराणे। पुष्पैर्धूपैश्च नैवेद्यै वीरक्रय-क्रियाहृतैः। पूजयेदित्यनुषङ्गः। वीरक्रयश्च वीरवत् याच्ञा-शून्येन विक्रेतृकृपण्यमन्तमन्त्रेनेति यावत्। अत्रापि विशेषो निगमकल्पोत्ते। धर्म्मार्जितधनक्रीतैर्यः कुर्य्यात् केशवार्च्चनं। उद्धरिष्यत्यसन्देहो दश पूर्व्वान्दशावरान्। पुरुषानिति शेषः। अन्यथाक्रयेतु। समित्पुष्पकुशादीनि ब्राह्मणः स्वयमा-हरेत्। शूद्रानीतैः क्रयक्रीतैः कर्म्म कुर्व्वन् पतत्यधः। इति शातातपीयेन निषेधः। सोपि नित्येतरविषयः॥ याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलं। नित्यपूजाविधौ पुष्पे न दोषः क्रयचौर्य्ययोरिति नारसिंहवचनात्। योगिनीतन्त्रे। नोत्सृज्य दद्यात् पुष्पाणि वनस्थानि कदाचन। न शक्नुवन्ति वै देवाः समाकर्षितुमुद्यताः। एकैकं कुसुमं यच्चा रक्षन्ति दश वै यतः। तथा यक्षाङ्गनाः पञ्च सर्व्वतः कुसुमावृताः। तस्मादाहृत्य कुसुमं यजेद्देवान् पितॄनपि। इति वनस्थपुष्पदान-निषेधः। नारसिंहे। यथा कथञ्चिदाहृत्य कुसुमैः पूजयेद्धरिं। नाक-पृष्ठमवाप्नोति नात्र कार्य्या विचारणा। मध्याह्नस्नानान-न्तरं पुष्पचयननिषेधो यथा मत्स्यसूक्ते। स्नात्वा मध्याह्न समये न छिन्द्यात् कुसुमं नरः। तत्पुष्पाभ्यर्च्चनादेव

निरये परिपच्यते। आगस्त्ये। परारोपितवृक्षेभ्यः पुष्याण्या-नीय योऽर्चयेत्। अविज्ञाप्य तु तस्यैव निष्फलं तस्य पूजन-मिति तु द्विजेतरविषयं। द्विजस्तृणै-पुष्पाणि सर्व्वतः स्ववदाहरेदिति याज्ञवल्कीयात्। आचारादर्शे। जवापुष्पञ्च वन्धूकं विष्णुक्रान्ता तथार्कजं। वकं सन्ध्यारक्तकञ्च तथैव मुनिपुष्पकं। सेवन्ती चैव पालाशं नागकेशरकन्तथा। सवृन्त-मेतद्ग्राह्यञ्च वृन्तवर्ज्येन नार्चयेत्। योगिनीतन्त्रे। वकुलस्य अशोकस्य अर्ज्जुनस्य महेश्वरि। पूजयेद्वृन्तवर्ज्येन सवृन्तेन विव-र्जयेत्। विष्णुक्रान्ता जवा नागकेशरं नागवल्लभं। वन्धूकञ्चैव मन्दारं सवृन्तेन समर्च्चयेत्। न स्पृशेद् वृन्तवर्ज्यञ्च भूगतञ्च न संस्पृशेत्। शेफालिवकुलेनैव भूगतेन समर्च्चयेत्। मालूरं भूगतं देयं तस्य काष्ठस्य चन्दनं। मन्त्रमहोदधौ। तुलसी वकुलो ब्रह्मचम्पकश्च सरोजिनी। विल्वकह्लारदमनास्तथा कुरुवकः कुशः। दूर्व्वाह्नि शम्यपामार्गविष्णुक्रान्ता मुनि-द्रुमः। धात्रीयुतानामेतेषां पत्रैः कुर्य्यात् सुरार्च्चनं। अम्ल-पलाशः कुरुवकः रक्ताम्लानः अह्निर्नागकेशरः। मुनिद्रुमः वकवृक्षः। विष्णुधर्म्मोत्तरे। भृङ्गराजस्य विल्वस्य वकपुष्पस्य च द्विजः। जम्ब्वाम्रनीजपूराणां पत्राणि विनिवेदयेत्। नरसिंह-पुराणे। पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः। अपर्य्यु-षितनिश्छिद्रैः प्रोक्षितैर्जन्तु वर्जितैः। आत्मारामोद्भवैर्व्वापि पुष्पैः संपूजयेद्धरिं। भविष्यपुराणं। प्रहरं तिष्ठते जाती करवीरमहर्निशं। तुलस्यां विल्वपत्रेषु सर्व्वेषु जलजेषु च।

न पर्य्युषितदोषोऽस्ति मालाकार-गृहेषु च। पाद्मे। तुलसी पर्य्युषिता नैव विल्वपत्रन्तथैव च। पद्मं पञ्चदिनात्त्याज्यं शेषं पर्य्युषितं विदुः। स्कान्दे। न पर्य्युषितदोषोऽस्ति जलजोत्पल-चम्पके। तुलस्यगस्त्यवकुले विल्वे गङ्गाजले तथा। मत्स्य-पुराणे। विल्वपत्रञ्च माध्यञ्च तमालामलकीदलं। कह्लारं तुलसी चैव पद्मञ्च मुनिपुष्पकं। एतत् पर्य्युषितं न स्यात् कुशाश्च कलिकास्तथा। पद्मञ्च मुनिपुष्पकमित्यत्र पद्मं पुन्नागचम्पकमिति योगिनीतन्त्रे पाठः। मत्स्यपुराणे। तुलस्यगस्त्यविल्वानां नास्ति पर्य्युषितात्मता। रक्तपुष्पस्यापि तथा नैव पर्य्युषितात्मता। सर्व्वाणि जलजातानि कुमुदान्युत्-पलानि च। एषां पर्य्युषिता शङ्का कार्य्या पञ्चदिनोर्द्ध्वतः। पुष्पाण्यञ्जलिभिर्द्द्यान्नैवविद्धान्यपि मालया। कृत्यकौमुद्यां। वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलं। न वर्ज्यं जाह्नवी-तोयं न वर्ज्यं तुलसीदलं। स्मृतिसारावल्यां। कुशपुष्पस्य रजत-सुवर्ण-कृतयोरपि। न पर्य्युषितदोषोऽस्ति तीर्थतोयस्य चैव हि। मुकुलैर्नार्च्चयेद्देवान् चम्पकैर्जलजैर्विना। योगिनीतन्त्रे॥ पद्मं दूर्व्वाङ्कुरञ्चैव तुलस्या दलमेवच। लग्नं पर्य्युषितं न स्याद्दमनस्य च शङ्करि। लग्नं वृन्तादिनेत्यर्थः। तेन याव-द्वृन्तमोचनं नस्यात्तावदेवापर्य्युषितत्वमिति। एकस्य नाना-विधपर्य्युषितत्वापर्य्युषितत्वविरोधः सुलभ-दुर्लभत्वाभ्यां परि-हरणीयः। योगिनीतन्त्रे॥ नीरजस्य च विल्वस्य तुलस्या दल-मेव च। न दुष्येच्छिन्नभिन्नञ्च जातीपुष्पञ्च शङ्करि। गौतमीये।

विल्वस्य वकुलस्यैव तथा धात्रीदलस्य च। तमालस्य च पत्रञ्च छिन्नभिन्नं न दुष्यति। देवीपुराणे। मल्लिकामालतीजातीकेतक्यशोकचम्पकैः। पुन्नागनागवकुलैः पद्मैरुत्पलजातिभिः। तुलसीकरवीरैश्च पलाशागस्त्यकुब्जकैः। एतैरन्यैश्च कुसुमैरच्चयेदच्युतं नरः। एषां दशसुवर्णस्य प्रत्येकं फलमाप्नुयात्। पुन्नागः पुलीन इति मिथिलायां प्रसिद्धः। नागो नागकेशरः। नारसिंहे। द्रोणपुष्पे नृपैकस्मिन् माधवाय निवेदिते। दश दत्वा सुवर्णानि यत् फलं तदवाप्नुयात्। द्रोणपुष्पसहस्राच्च खादिरकं प्रशस्यते। खादिराणां सहस्रेभ्यः शमीपुष्पं प्रशस्यते। शमीपुष्पसहस्रेभ्यो विल्वपत्रं प्रशस्यते। विल्वपत्रसहस्रेभ्यो वकपुष्पं प्रशस्यते। वकपुष्पसहस्रेभ्यो नन्द्यावर्त्तं प्रशस्यते। नन्द्यावर्त्तसहस्राद्धि करवीरं प्रशस्यते। करवीरसहस्राद्धि श्वेतं तत् पुष्पमुत्तमम्। करवीरश्वेतपुष्पात् पालाशं पुष्पमुत्तमं। पालाशपुष्पसाहस्रात् कुशपुष्पं प्रशस्यते। कुशपुष्पसहस्राद्धि वनमाला विशिष्यते। वनमाला-सहस्राद्धि चम्पकन्तु विशिष्यते। चम्पकस्य सहस्राद्धि अशोकं पुष्पमुत्तमं। अशोकस्य सहस्राद्धि सेवन्ती पुष्पमुत्तमं। सेवन्तीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तमं। कुब्जकस्य सहस्राद्धि मालतीपुष्पमुत्तमं। मालत्याश्च सहस्राद्धि त्रिसन्ध्यारक्तकं वरं। त्रिसन्ध्यारक्तसाहस्रात् त्रिसन्ध्याश्वेतकं वरं। त्रिसन्ध्याश्वेतसाहस्रात् कुन्दपुष्पं विशिष्यते। कुन्दपुष्पसहस्राद्धि शतपत्रं विशिष्यते। शतपत्रसहस्राद्धि मल्लिकापुष्पमुत्तमं। मल्लिकापुष्पसाहस्रा-

ज्जातीपुष्पं विशिष्यते। नारदीये। मालतीबकुलाशोकशेफालि-नवमल्लिका। अम्लानतगराङ्कोटमल्लिकामधुपिण्डकाः। यूथि-काष्टपदं कुन्दं कदम्बमधुपिङ्गलं। पाटलाचम्पकं कृष्णं नागकुसुमातिमुक्तकं। केतकं कुरुवकं विल्वं कह्लारं वासकं द्विजाः। पञ्चविंशति पुष्पाणि लक्ष्मीतुल्यप्रियाणि मे। मदीय-वनमालायाः पुष्पैरेभिः पुरा मया। ग्रथिता हि तथा शुद्धैः पञ्चविंशतिभिः क्रमात्। आपादलम्बिनी माला वनमाला प्रकीर्त्तिता। चम्पकपदं नागचम्पकभिन्नचम्पकपरं। पूर्व्व-वचने तु सामीपत्र्यमिन्दिरा। नरसिंहपुराणे। केतकी-पत्रपुष्पञ्च भृङ्गराजस्य पत्रकं। तुलसी कृष्णतुलसी सद्यस्तुष्टि-करं हरेः। आचारादर्शे। केतकीपत्रेणकेन पूजितो गरुड़-ध्वजः। समाः सहस्रं सुप्रीतो देवदेवो जनार्द्दनः। केतकी-पत्रेणैकेनेति पुष्पावयवेनेत्यर्थः। विष्णुधर्म्मोत्तरे। रक्तानि यानि धर्म्मज्ञ चैत्यवृक्षोद्भवानि च। श्मशानवनजातानि यानि चाकालजानि च। स्वयं पतितपुष्पाणि त्यजेदुपहतानि च। कूटजं शाल्मलीपुष्पं शिरीषञ्च जनार्द्दने। निवेदितं भयं रोगं निःस्वत्वञ्च प्रयच्छति। बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत्। अनुलेपनकुसुमानि सौभाग्यं प्रयच्छेत्। आग्नेये। पद्मान्यम्बुसमुत्थानि रक्तनीले तथोत्पले। सितोत्पलञ्च कृष्णस्य दयितं सर्व्वदा नृप। वामनपुराणे। पारिभद्रं पाटला च वकुलं गिरिशालिनी। तिलकं जम्बुवनजं पीतकं तगरन्तथा। एतानि हि प्रशस्तानि कुसुमान्यच्युतार्च्चने। पारिभद्रं मन्दारः

पाटला पारलीति प्रसिद्ध' गिरिशालिनी अपराजिता। जम्बु-वनजं श्वेतजवाकुसुमं। विष्णुधर्म्मोत्तरे। रक्ताशोकस्य कुसुम-मतसीकुसुमन्तथा। चम्पकस्य च देयं वै तथा भूचम्पकस्य च। अतसी शणः। विष्णुरहस्ये। वर्णानान्तु यथा विप्रस्तीर्थानां जाह्नवी यथा। देवानाञ्च यथा विष्णुः पुष्पाणां मालती तथा। मालत्यानुदिनं योऽर्च्चे द्देवेशं गरुड़ध्वजं। जन्ममृत्युजरारोगै-र्विमुक्तोऽसौ विमुक्तिभाक्। पञ्चपत्रा भवेज्जाती सप्तपत्रा तु मालती। स्कान्दे। यदा यदा मुनिश्रेष्ठ कमलैरर्च्चितो हरिः। ददाति वाञ्छितान् कामान् पापञ्च कुरुते क्षयं। यथा पद्मालयां प्राप्य प्रीतो भवति माधवः। कदम्बकुसुमं प्राप्य तथा प्रीणाति विश्वधृक्। येऽर्च्चयन्ति जनाध्यक्षं करवीरैः सितासितैः। चतुर्वर्षाणि राजेन्द्र प्रीतो भवति माधवः। एकेन करवीरेण सितेनाप्यसितेन वा। हरिं वा हरमभ्यर्च्च्य सर्व्वयज्ञफलं लभेत्। अगस्त्यकुसुमैर्देवं येऽर्च्चयन्ति जनार्द्दनं। तेषां दर्शनमात्रेण नरकान्न प्रपश्यति। आचारादर्शे। अपराध-सहस्राणि अपराधशतानि च। पद्मिनैकेन देवेशः क्षमते हेलयार्च्चितः। नारदीये। मनोहरैः सुगन्धैश्च पुष्पैरपि मनो-रमैः। अभ्यर्च्च्य विष्णुमीशं वा तत्सारूप्यं ततो व्रजेत्। पद्मपुष्पेण गोविन्दं शिवं वाप्यर्च्चयेन्नरः। स याति विष्णुभवनं कुलत्रितयसंयुतः। हरञ्च केतकीपुष्पैर्विष्णुं धुस्तूरकैर्निशि। सर्व्वपापैर्विनिर्मुक्तो देवमूर्त्तिं दिवं व्रजेत्। सप्तलाकुसुमै-र्विष्णुं रुद्रजाटैर्महेश्वरं। अभ्यर्च्च्य देवदेवेशं सारूप्यं याति

मानवः। समला नवमल्लिका। तथा,—शिवं विष्णुञ्च संपूज्य प्रस्थपुष्पैर्मनोहरैः। शमीपुष्पैश्च राजेन्द्र सर्व्वान् कामानवाप्नुयात्। प्रस्थपुष्पैर्जम्बीरपुष्पैः। पाद्मे। पद्ममञ्जरिकाभिश्च उपर्य्युपरि सर्व्वदा। येऽर्च्चयन्ति महाभागा गोकोटिफलभागिनः। मालतीकलिकामालामीषद्विकसितां हरेः॥ दत्वा शिरसि विप्रेन्द्र वाजिमेधफलं लभेत्॥ गारुड़े॥ पक्षीन्द्र न श्रुतं दृष्टं भूतं वा न भविष्यति। मालत्या च समं पुष्पं द्वादश्या च समा तिथिः। यत्र यत्र खगश्रेष्ठ भारते मालतीवनं। पत्रे पत्रे तथा तुष्टो वसते तत्र केशवः। वल्लभं मालतीपुष्पं माधवस्य सदैव हि। हेलया दापयेत् स्थानं स्वकीयं गरुड़ध्वजः। दत्तमात्रं हरेः पुष्पं निर्म्माल्यं भवति क्षणात्। अहोरात्रं प्रभुक्तं हि मालतीकुसुमं न हि। विष्णोरङ्गात् परिभ्रष्टं मालतीकुसुमं खग। यो धारयेच्च शिरसि सर्व्वधर्म्मफलं लभेत्। अदत्त्वा केशवे यस्तु स्वमूर्द्ध्नि मालतीं वहेत्। स नरः खगशार्द्दूल सर्व्वधर्म्मच्युतो भवेत्। सुवर्णदानं गोदानं भूमिदानं खगेश्वर। विहाय कार्त्तिके मासि मालतीं यच्छ केशवे। स्कान्दे। शुभ्राशुभ्रैर्म्महागन्धैः कुसुमैः पङ्कजोद्भवैः। अधोक्षजं समभ्यर्च्य नरो याति हरेः पदं। अहो नष्टा विनष्टास्ते पतिताः कलिकन्दरे। यैर्नार्च्चितो हरिर्भक्त्या कमलैरसितैः सितैः। रक्तपद्मप्रदानेन रुक्ममाषकदो भवेत्। शतं दत्वा च धर्म्मात्मा वह्निष्टोमफलं लभेत्। सहस्रञ्च तथा दत्वा सूर्य्यलोके महीयते। विष्णुलोकमवाप्नोति

लच्चपूजाविधायकाः॥ रक्तपद्मप्रदानाद्धि श्वेतस्य द्विगुणं फलं कमलैः कमलाकान्तः पूजितः कार्त्तिके तु यैः। कमला त्वनुग तेषां जन्मान्तरशतेष्वपि। विष्णुधर्म्मोत्तरे। विपुलं प्राप्नुयात स्वर्गं दुराचारोऽपि दुष्टधीः। दत्वा नीलोत्पलं विष्णोर्नात्र कार्य्या विचारणा॥ नीलोत्पलशतं दत्वा वह्निष्टोमफल लभेत्। नीलोत्पलसहस्रेण पुण्डरीकमवाप्नुयात्। पुण्ड रीकं पुण्डरीकाक्षं॥ स्कान्दे॥ जातरूपनिभैर्विष्णुं कदम्ब-कुसुमैर्मुने। येऽर्च्चयन्ति च गोविन्दं न तेषां सौरिजं भयं। कदम्बकुसुमैर्हृद्यै र्येऽर्च्चयन्ति जनार्द्दनं। तेषां यमालयो नैव, न जायन्ते कुयोनिषु। घनागमे घनश्यामः कदम्बकुसुमार्च्चितः। ददाति वाञ्छितान् कामान् शतजन्मनि सम्पदः। चतुर्युगानि विप्रेन्द्र प्रीतो भवति केशवः। सितरक्तैर्महा-पुण्यैः कुसुमैः करवीरजैः। केशरैः केतकीपुष्पैर्मिथुनस्थे दिवाकरे। येनार्च्चितः सकृद्भक्त्या स मुक्तो नरकार्णवात्। कार्त्तिके केतकीपुष्पं दत्तं येन कलौ हरेः। [illegible]प्रदानश्च देवर्षे तारितं स्वकुलायुतं। स्कान्दे। अभ्यर्च्य कुन्दकुसुमैः केशवं कल्मषापहं। प्रयाति भवनं विष्णोर्वन्दितं मुनिचारणैः। कर्णिकारमयैः पुष्पैः कान्तैः कणकसुप्रभैः। अर्च्चयित्वाच्युतं लोके तस्य लोके महीयते। मल्लिका-कुसुमैर्देवं वसन्ते गरुड़-ध्वजं। योऽर्च्चयेत् परया भक्त्या दहेत् पापं त्रिधार्जितं॥ अथ वर्ज्जनीयपुष्पं॥ * ॥ गौतमीये। मलिनं भूमि-संस्पृष्टं क्रमिकेशादिदूषितं। पर्य्युषितञ्च कुसुमं वर्ज्जयेद्देवता-

र्चने॥ राघवभट्टधृतं। त्रिपत्रन्यूनकुसुमैर्नार्च्चयेत्तु कदाचन। अन्यार्थमाहृतं दुष्टं तथैवान्योपभुक्तकं। त्रिपत्रन्यूनैरिति शुङ्गग्राहिकतयाविहित-द्रोणादीतरैरित्यर्थः। स्कान्दे। क्लिष्टं पर्य्युषितञ्च भूमिपतितं छिद्रञ्च कीटान्वितं, यत्केशोपहतञ्च गन्धरहितं यच्चोग्रगन्धान्वितं। हस्ते यद्विधृतं प्रणामसमये यद्वामहस्ते कृतं, यच्चान्तर्जलधौतमर्च्चनविधौ पुष्पञ्च तद्वर्जयेत्॥ भङ्क्त्वा यद्विटपादिकं क्षितिरुहश्चोत्पाद्य यच्चाहृतं, यच्चाक्रम्य समाहृतं तदखिलं पुष्पं भवत्यासुरं॥ मन्त्रतन्त्रप्रकाशे॥ पत्रेषु तुलसी श्रेष्ठा बिल्वमामलकन्तथा। मरुको देवकह्लारं विष्णुक्रान्ता तथैव च। अपामार्गञ्च गान्धारीपत्रं सुरभिसंज्ञकं। नागवल्लीदलं दूर्व्वाकुशपत्रं तथापरं। तमालपत्रञ्चागस्त्यपत्रं भृङ्गदलन्तथा। स्कान्दे। त्यक्त्वा तु मालतीपुष्पं पुष्पाण्यन्यानि च प्रभुः। गृह्णाति तुलसीं शुष्कामपि पर्य्युषितां हरिः। तुलसीपत्रमादाय यः करोति ममार्च्चनं। न पुनर्योनिमाप्नोति मुक्तिभागी भवेद्धि सः। समञ्जरीदलैर्युक्तं तुलसीसम्भवैः चितौ। कुर्व्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ युगे। गृहीत्वा तुलसीपत्रं यः करोति ममार्च्चनं। अर्च्चितं सकलं तेन सदेवासुरमानुषं। ब्राह्मे च। तुलसीपद्मपुष्पाणि पलाशशमीफलानि च। चत्वारि पुण्यपुष्पाणि पुनः प्रक्षाल्य पूजयेत्। नरसिंहपुराणे। अपामार्गस्य पत्रञ्च पत्रं भृङ्गरजस्य च। तस्माच्च खादिरं पत्रं ततश्च शमीपत्रकं। दूर्व्वापत्रं ततः

श्रेष्ठं ततोऽपि कुशपत्रकं। ततो दमनकं श्रेष्ठं ततो विल्वप
पत्रकं। विल्व-पत्रादपि हरेस्तुलस्याः पत्रमुत्तमं। एतेषान
यथालब्धैः पत्रैर्यश्चार्च्चयेद्धरिं। सर्व्वपापविनिर्मुक्तो विष्णु
लोके महीयते। राघवभट्टः॥ सद्यः पर्य्युषितं वापि निर्म्माल
नैव दुष्यति। तथान्यैर्न हरेस्तुष्टिस्तुलस्या तुष्यते यथा
मारदीये। शाखाग्रात् पतितं भूमौ यच्च पत्रं पुरातनं
तेनापि पूज्यो गोविन्दो मधुकैटभमर्द्दनः। विष्णुधर्म्मोत्तरे
संक्रान्त्यां पक्षयोरन्ते द्वादश्यां निशिसन्ध्ययोः। यैश्छिन
तुलसीपत्रं तैश्छिन्नं हरिमस्तकं। स्मृतिसागरे॥ वैधृतौ च
व्यतीपाते भौमभार्गवभानुषु। पर्व्वद्वये च संक्रान्त्यां द्वादश्य
सूतकद्वये। तुलसीं ये विछिन्दन्ति ते छिन्दन्ति हरेः शिरः
पाद्मे। द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके। लुनाति
स नरो गच्छेन्निरयानतिगर्हितान्। विष्णुधर्म्मे। न च्छिन्द्या
त्तुलसीपत्रं द्वादश्यां वैष्णवः क्वचित्। देवार्थे तुलसीच्छेदे
होमार्थे समिधस्तथा। इन्दुक्षये न दुष्येत गवार्थेऽ [illegible]स्य च
एतत्तु पूर्व्वसञ्चितासम्भवविषयं॥ अथ तुलसीपत्रचयन-
मन्त्रः॥ * ॥ पद्मपुराणे। तुलस्यमृतनामासि सदा त
केशवप्रिये। केशवार्थे चिनोमि त्वां वरदा भव शोभने। त्वदङ्ग
सम्भवैः पत्रैः पूजयामि यथा हरिं। तथा कुरु पवित्राङ्गि कलौ
मलविनाशिनि। विना त्वया महाभागे समस्तं कर्म्म निष्फलं।
अतस्तुलसि देवि त्वां चिनोमि वरदा भव। चयनोद्भवदुःखन्ते
यद्देवि हृदि जायते। तत् क्षमस्व जगन्मातस्तुलसीं त्वां

नमाम्यहं। मन्त्रेणानेन यो दद्याद् गृहीत्वा तुलसीदलं। पूजायां देवदेवस्य लक्षकोटिगुणं भवेत्॥ अथ पुष्पप्रतिनिधिः॥ विष्णुधर्म्मोत्तरे। पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्नुयात्। ज्ञानमालायां॥ पुष्पाभावे जलेनापि दूर्व्वया तण्डुलेन च। नित्यपूजा प्रकर्त्तव्या भक्तिभावेन सुन्दरि। यामले। नाक्षतैरर्च्चयेद्विष्णुं न तुलस्या विनायकं। न दूर्व्वया यजेद्दुर्गां माल्लूरैर्न दिवाकरं। अत्र प्रतिनिधावेव तण्डुलवर्ज्जनं नत्वर्घ्य-नैवेद्यादौ आमस्याद्येऽग्रदानबाधप्रसक्तेः। दूर्व्वानिषेधस्य शुक्लदूर्व्वापरत्वं। तथा च कुलावलीये। रक्तमर्घ्यं श्वेतदूर्व्वां नीलकण्ठं कुरुण्टकं। न दद्याच्च महादेव्यै यदीच्छेच्छुभमात्मनः। नीलकण्ठं प्रसिद्धं, कुरुण्टकं पीतझिण्टी॥ ज्ञानमालायां। पुष्पाण्यञ्जलिभिर्दद्यान्निषिद्धान्यपि मालया। अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना। पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखं। दुःखदं तत् समाख्यातं यथोत्पन्नं तथार्पणं। तुलस्यामलकी-पत्रं विल्वपत्रञ्च पार्व्वति। देवपूजां प्रकुर्व्वीत यथोक्तन्तु तथार्पयेत्। यथोत्पन्नमिति विल्वपत्रेऽधोमुखत्वं। तथाच तत्रैव॥ पूर्व्वपत्रे स्थितो ब्रह्मा उत्तरे विष्णुदेवता। निश्छिद्रे विल्वपत्रे तु मध्यमस्थः सदाशिवः। पृष्ठभागे स्थिता यक्षा यक्षानाञ्च विरोधकाः। शिवे तु पूर्व्वभागेन विल्वपत्रं समर्पयेत्। पूर्व्वभागेनेति दक्षिणभागेनेत्यर्थः। शिवेति देवतामात्रस्योपलक्षणं। पूर्व्वपत्रे दक्षिण-

पक्षे, उत्तरे वामे । उत्तरे चास्य सौवर्णं लक्षं पार्श्वे भविष्यतीति महाभारतेप्युत्तरशब्दस्य वामवाचकत्वदर्शनात् । यद्वा पूर्व्व-दिङ्मुखार्च्चने वामाङ्गस्योत्तरदिक्स्थत्वेन उत्तरशब्दस्य वामे रूढ़िः । एवं वामेतरस्य दक्षिणदिक्स्थत्वेन दक्षिणशब्दरूढ़िरिति । एवमुत्तरदिङ्मुखदेवार्च्चने वामाङ्गस्य पश्चिमदिक्स्थत्वेन पश्चिमाख्यानं । तदितराङ्गस्य पूर्व्वदिक्स्थत्वेन पूर्व्वाख्यानमिति ध्येयं ॥ योगिनीतन्त्रे ॥ करवीरकृता माला येऽर्च्चयन्तीह माधवं । देवेन्द्रोऽपि महेशानि करोति करसम्पुटं । माला इति प्राप्येत्युपस्करणीयं । देवेन्द्रोऽपीति तान् दृष्ट्वेति शेषः । अगस्त्य-संहितायां ॥ विद्वन् सर्व्वेषु पुष्पेषु पङ्कजं श्रेष्ठमुच्यते । तत्पुष्पेष्वपि तन्माल्यं लक्षकोटिगुणं भवेत् । योऽर्च्चयेत् तुलसीमाल्यैर्यज्ञकोटि-फलं लभेत् । विल्वपत्रेण ये विष्णुं कार्त्तिके परमेश्वरि । अर्च्चयन्ति हरिं भक्त्या मुक्तिस्तेषां करे स्थिता । पाद्मे । मञ्जरीभिः सपत्राभिर्म्मालाभिश्चापि केशवः । तुलस्याः कार्त्तिके प्रीतो ददाति पदमव्ययं ॥ नरसिंहपुराणे ॥ सर्व्वासां प[...]जातीनां जातीपुष्पमिहोत्तमं । जातीपुष्पसहस्रेण यच्छे माला सुशोभनां । विष्णवे विधिवत् भक्त्या तस्य पुण्यफलं शृणु । कल्पकोटि-सहस्राणि कल्पकोटिशतानि च । वसेद्विष्णुपुरे श्रीमान् विष्णु-तुल्यपराक्रमः । केशवः केतकीपुष्पैर्म्मिथुनस्थे दिवाकरे । येनार्च्चितः सकृद्भक्त्या सोऽश्वमेधफलं लभेत् । विहाय सर्व्वपुष्पाणि मुनिपुष्पेण केशवं । कार्त्तिके योऽर्च्चयेद्भक्त्या मुच्यते नरकार्णवात् ॥ * ॥ अथ शिवपूजायां विहितपुष्पाणि ॥ * ॥ भविष्ये ।

पुष्पाणि कथयाम्यद्य इष्टानिष्टानि सुन्दरि। करवीरो वकश्चैव अर्कसुन्मत्तकस्तथा। पाटला वृहती चैव तथा च गिरिमल्लिका। अशोकस्य च पुष्पाणि मन्दारस्यापराजिता। शमीपुष्पाणि वन्यानि कुब्जकः शङ्खिनी तथा। अपामार्गस्तथा पद्मजाती-पुष्पञ्च कौनकं। चम्पकः पिण्डतगरस्तथा वै नागकेशरः। पुन्नागः किङ्किरातश्च द्रोणपुष्पं तथोचिरं। शिंशपोडुम्बरश्चैव जयामल्ली तथैव च। पुष्पाणि यज्ञवृक्षस्य सदा विल्वः प्रियः शुभे। कुसुम्भस्य च पुष्पाणि तथा वै किंशुकस्य च। नीलञ्च कुमुदञ्चैव तथा रक्तोत्पलानि च। अवर्ज्यानि च पुष्पाणि स्थलजान्यम्बुजानि च। भावेनेह प्रदत्तानि सर्व्वाणि कुसुमानि च। गृह्लामि शिरसा देवि यश्चे भक्त्या निवेदयेत्। मे शिवस्य॥ गिरिमल्लिका कूटजः॥ शङ्खिनी चोरपुष्पी। शिंशपा अगुरुः। जया जयन्ती, मल्ली मल्लिका, यज्ञवृक्षस्यामलक्यादेः। किंशुकस्य पलाशस्य॥ तथा॥ वृहतीकुसुमैर्भक्त्या सकृद्यो लिङ्गमर्च्चयेत्। गवामयुतदानस्य फलं प्राप्य दिवं व्रजेत्। अशोकश्चेतमन्दारकर्णिकारवकानि च। करवीरार्कमन्दारशमी-तगरकेशरः। पुष्पैरेतैर्यथालाभैर्यो नरः पूजयेच्छिवं। स यत्फलमवाप्नोति तदिहैकमनाः शृणु। सूर्य्यकोटिप्रतीकाशै र्विमानैः सार्व्वकामिकैः। दोधूयमानश्चमरैः शिवलोके महीयते। मन्दारो रक्तमन्दारः, केतकः पुन्नागः॥ स्कान्दे॥ चतुर्णां पुष्प-जातीनां गन्धमाघ्राति शङ्करः। अर्कस्य करवीरस्य विल्वस्य च वकस्य च। मणिमुक्ताप्रवालैश्च रत्नैरप्यर्च्चनं मम। न

गृह्णामि विना देवि विल्वपत्रैर्वरानने ॥ भविष्ये । विल्वपत्रै-रखण्डैश्च यो लिङ्गं पूजयेत् सकृत् । सर्व्वपापविनिर्मुक्तः शिवलोके महीयते । धुस्तूरकैश्च यो लिङ्गं सकृच्च पूजयेन्नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते । शैवसर्व्वस्वे ॥ अर्क-पुष्पन्तथैकञ्च शिवाय विनिवेदयेत् । दश दत्वा सुवर्णस्य यत्फलं तदवाप्नुयात् । अर्कपुष्पसहस्रेभ्यः करवीरं प्रशस्यते । करवीर-सहस्रेभ्यो विल्वपत्रं प्रशस्यते । विल्वपत्रसहस्रेभ्यो द्रोणपुष्पं प्रशस्यते । द्रोणपुष्पसहस्रेभ्यस्त्वपामार्गः प्रशस्यते । अपामार्ग-सहस्रेभ्यः कुशपुष्पं प्रशस्यते । कुशपुष्पसहस्रेभ्यः शमीनीलोत्-पलं वरं । नीलोत्पलसहस्रेभ्यो वकपुष्पं प्रशस्यते । वकपुष्प-सहस्रेभ्य एकं धुस्तूरकं वरं । धुस्तूरकसहस्रेभ्यः शमीपुष्पं प्रशस्यते । करवीरसमा ज्ञेया जातीविजयपाटलाः । श्वेत-मन्दारकुसुमं श्वेतपद्मञ्च तत्समं । नागचम्पकपुन्नागधुस्तूरक-समाः स्मृताः ॥ विजयोऽर्ज्जुनः ॥ तत्समं करवीरसमं । तथा । ब्रह्मविष्णुशिवादीनां द्रोणपुष्पमतिप्रियं । अर्कस्य करवीरस्य कुशमुख्यत्तमेव च । यो मे प्रयच्छति देवि लभते गाणपं नरः ॥ स्कान्दे । करवीरस्य कुसुमैर्लिङ्गं संपूज्य यत्नतः । दिव्यवर्ष-सहस्राणि सुखेन दिवि मोदते । अष्टवर्षसहस्राणि पुन्नाग-कुसुमार्च्चनैः । चम्पकैः कुसुमैर्लक्षवर्षाणि वै तथा नरः । धुस्तूरपद्मपुष्पैश्च कोटिवर्षाणि मोदते । नीलोत्पलानां पुष्पैश्च दशकोटि समावसेत् । नन्दिकेश्वरे । यः सुगन्धि रक्तपुष्पैर्लिङ्गं सम्यक् प्रपूजयेत् । मालाभिर्व्वा सुगन्धाभिः सोऽनन्तफलमश्नुते ।

अष्टाभिर्व्वा शिवं पुष्पैरभ्यर्च्य विधिना नृप। प्रयाति शाङ्करं धाम किं पुनर्व्वा सहस्रशः। स्कन्दपुराणे॥ वैशाखे मासि कर्त्तव्यं पूजा पाटलया सदा। सर्व्वान् कामानवाप्नोति ज्यैष्ठे पद्मार्च्चनेन तु। आषाढ़े विल्वकह्लारैरीप्सितं लभते फलं। नवमल्लिकया पूजा नभोमासि महाफला। कदम्बैश्चम्पकैश्चैव नभस्ये सर्व्वकामदा। पूजा पङ्कजमालत्या त्विषेऽभ्युदयकारिणी। शतपत्रिकया पूजा कार्त्तिके सार्व्वकामिकी। मार्गे नीलोत्पलैः पूजा पौषे तु गन्धकैस्तथा। माघे तु कुन्दकुसुमैर्म्मरुपुष्पवकेन वा। फाल्गुने शतपत्रैस्तु यः कुर्य्यादर्च्चनं शिवे। स लभेत् शतयज्ञानां सर्व्वदानफलन्तथा। दमनस्य च पत्रैश्च मञ्जर्य्याच विशेषतः। मधुमासे च संपूज्य माञ्चैव सुरसुन्दरि। सर्व्वदेवपदं भुक्त्वा प्राप्नोति शिवरूपतां। यस्तु द्वादशमासं वै कमलैर्लिङ्गमर्च्चयेत्। स मया सदृशो देवि भविष्यति न चान्यथा॥ शिवधर्म्मे॥ भाद्रपदस्य मासस्य अपामार्गेण योऽर्च्चयेत्॥ हंसध्वजसमायुक्तविमानेन स गच्छति। मार्गशीर्षस्य मासस्य वकपुष्पेण योऽर्च्चयेत्। स त्रैलोक्यमतिक्रम्य यत्राहं तत्र गच्छति। प्रत्येकमुक्तपुष्पेषु दशसौवर्णिकं फलं। स्रङ्निबन्धेषु तेष्वेव द्विगुणं फलमुच्यते। देवीपुराणे॥ रक्तपद्मसहस्रेण यो मे पूजां प्रयच्छति। कल्पकोटिसहस्राणि कल्पकोटिशतानि च। स्थित्वा देवीपुरे श्रीमांस्ततो राजा क्षितौ भवेत्॥ भविष्ये॥ नीलोत्पलसहस्रेण यो मे मालां प्रयच्छति। शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु। कल्पकोटि-

सहस्राणि कल्पकोटिशतानि च। वसेच्छिवपुरे श्रीमान् शिव-तुल्यपराक्रमः। शेषाणां पुष्पजातीनां यत् फलं परिकीर्त्तितं। स तत् फलमवाप्नोति शिवलोके महीयते। योगिनीतन्त्रे। सहस्रकुसुमैर्म्मालां चन्दनाक्तैर्निवेदयेत्। अष्टोत्तरसहस्रेण शिरोमाला उदाहृता। पार्श्वग्रन्थियुतां मालामसकृद्ग्रन्थि-संयुतां। वर्ज्जयेत् सर्व्वदेवेषु चिवर्णाश्च विवर्ज्जयेत्। न दद्यात् सर्व्वरक्ताश्च सर्व्वश्वेतां न दापयेत्। सर्व्वपीतां सर्व्व-कृष्णां न दद्यान्मम सुव्रते। मालापरिमाणमपि तत्रैव। वाहुमात्रं कण्ठमाल्यं द्विगुणं वक्षसः स्मृतं। शिरोमाल्यं वाहुमात्रं चतुरङ्गुलसंयुतं। जलजानां यथायोग्यं माल्ये दण्डं विवर्ज्जयेत्। दण्डं नालं। तुलसीविल्वकह्लारधात्रीपत्रं तमालकं। एषां पञ्चकपत्रेण कुर्य्यान्माल्यं समाहितः। चतु-र्द्दश्यान्तथा रात्रौ शिवाय विनिवेदयेत्। चतुर्द्दश्यां तथाष्टम्यां विल्वमाल्यं निवेदयेत्। शतहस्तमितं दद्याद्राजलक्ष्मीमवा-प्नुयात्। दशहस्तमितं दत्त्वा अचलां श्रियमाप्नुयात्। तन्माल्याः शतहस्ते च शिवाय विनिवेदिते। दशजन्मकृतं पापं तत्क्षणा-देव नश्यति। मालत्याः सर्व्वशुक्लेन दद्यान्माल्यं समाहितः। जाती-यूथ्योः कृता माला सर्व्वश्वेता न दुष्यति॥ अथ निषिद्ध-पुष्पाणि॥ * ॥ देवीपुराणे। कुसुमैर्नार्च्चयेद्देवमपक्कं न निवेदयेत्। फलं कथितविद्धञ्च यत्नपक्कमपि त्यजेत्। केतकञ्चातिमुक्तञ्च कुन्दयूथी मदन्तिका। शिरीषसर्ज्ज-वन्धूक-कुसुमानि विवर्ज्जयेत्। अतिमुक्तकं माधवी, मदन्तिका

यूथिकासहस्रपुष्पं, सर्ज्ज इन्द्रतरुः। तथा,—न माधवो नापि करञ्जसर्ज्जौ, न केतकी नैव मदन्तिका वा। न कुन्दबन्धूकविभीतकानि, यूथो-शिरीषे विहितानि शम्भोः। कर्कन्धुपत्रं तगरं कारञ्जञ्च त्रिसन्ध्यकं। विभीतकानि धन्वानि कुसुमानि विवर्ज्जयेत्। सर्ज्जबन्धूकपुष्पाणि कुन्दयूथी मदन्तिका। केतकी चातिमुक्तञ्च श्वेता चैवापराजिता। कपित्थं लकुचं भल्वा शिरीषञ्च विभीतकं। धातकीं निम्बपत्रञ्च पूजने तु विवर्ज्जयेत्। बन्धूकं रक्तमिति॥ तन्त्रान्तरे॥ शिवे कुन्दं मदन्तीञ्च यूथीं बन्धूककेतके। जवारक्तत्रिसन्ध्ये द्वे मालतीं केतकीन्तथा। धूस्तुनं कुमुदं रक्तं हयारिञ्च विवर्जयेत्। उग्रगन्धमगन्धञ्च क्रमिकीटादिदूषितं। वासोभिः संभृतैर्नीतं मतिमान्नार्पयेच्छिवे। केशकीटापविद्धानि तथा पर्य्युषितानि च। स्वयं पतितपुष्पाणि त्यजेदुपहृतानि च॥ * ॥

अथ शक्तिपूजाविहितपुष्पाणि॥ * ॥ देवीपुराणे। ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः। शितैरक्तैस्तथा पद्मैर्नीलपद्मैश्च पूजयेत्। किंशुकैस्तगरैश्चैव किङ्किरातैः सचम्पकैः। किञ्चातिबहुनोक्तेन सामान्येनेदमुच्यते। उक्तानुक्तैस्तथा पुष्पैर्जलजैः स्थलजैरपि। पत्रैः सर्व्वैर्यथालाभैर्देवीञ्च सततं यजेत्। पुष्पाभावे यजेत् पत्रैः पत्राभावे तु तत्फलैः। अक्षतैर्वा जलैर्वापि न पूजां व्यतिलङ्घयेत्। एतेषामप्यभावे तु मानसीं भक्तिमाश्रयेत्। योगिनीतन्त्रे॥ तगरैः पूजयेद्देवीं जवाकनकचम्पकैः। बकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरुण्टकैः।

धुस्तूरैश्चातिमुक्तैश्च बन्धूकागस्त्यसम्भवैः । दमनैः सिन्धुवारैश्च दूर्व्वाङ्कुरैः सुकोमलैः । मञ्जरीभिः कुशानाञ्च विल्वपत्रैः सुकोमलैः । अगस्त्यसम्भवैर्व्वकपुष्पैः । अत्र मन्दारविधानं दुर्गापूजापरं । दुर्गान्यदेवीपूजायां मन्दारार्कं न शस्यते । पूजने कमलायास्तु द्रोणपुष्पं प्रशस्यते । इति पुष्पाध्यायि स्मृतिवचनात् । एवञ्च विवर्ज्जयेदित्यधिकृत्य । देवीनामर्क-मन्दारावादित्ये तगरन्तथेति शातातपवचनं दुर्गान्यदेवीपूजा-परम् । देवीपुराणे ॥ विल्वपत्रै रखण्डैर्यः सकृद्देवीं प्रपूजयेत् । सर्व्वपापविनिर्म्मुक्तः शिवलोके महीयते । तन्त्रान्तरे ॥ देवी-पूजा प्रकर्त्तव्या जलजैः स्थलजैरपि । विहिताविहितैर्व्वापि भक्तियुक्तेन चेतसा ॥ मुण्डमालायां । पुष्पाण्यपि तदा दद्याद्रक्तानि चाशितानि च । तगरं मल्लिकाजाती मालती यूथिकास्तथा । धुस्तूराशोकवकुलान् कृष्णश्वेतापराजिताः । वकपुष्पं विल्वपत्रं चन्द्रकं नागकेशरं । अर्कपुष्पं वर्व्वराञ्च देव्यै दद्यात् प्रियम्वदे । वह्निं मल्लोञ्च कारञ्जं रक्तं [illegible]परि-कीर्त्तितं । चन्द्रकं चन्द्रमल्लीं, वह्निं चितां, कारञ्जं करञ्जा पुष्पं, रक्तं राङ्गणं । तथा—पद्मपुष्पेण रक्तेन सन्तुष्टाः सर्व्वदेवताः । वन्यपुष्पैश्च विविधैः सन्तुष्टा पार्व्वती तथा । आमलक्यास्तु पत्रेण तुष्टा पुष्पेण पार्व्वती ॥ योगिनीतन्त्रे ॥ जवापुष्पं कुङ्कुमञ्च विल्वपत्रं सुकोमलं । माघ्यं जयाह्वयारिश्च रक्तरुद्र-जटा तथा । जलजानि च देयानि तथा कालोद्भवानि च ॥ वाराहीतन्त्रे ॥ श्रियमभ्यर्च्चयेन्नित्यं सुगन्धिकुसुमादिभिः ।

नन्द्यावर्त्तं वकं पद्मकुसुमं वकुलन्तथा। श्रीफलं तस्य कुसुमं मल्लिका जातिकाद्वयं। अशोकं माधवी झिण्टी रक्तपुष्पाणि यानि च। उग्रगन्धानि यानि स्युः केशवेनार्चयेत् क्वचित्॥ भविष्ये। करवीरेण पुष्पा च पूजयेद्यस्तु चण्डिकां। अग्निष्टोमफलं लब्ध्वा सूर्य्यलोके महीयते। पूजयित्वा नरो भक्त्या चण्डिकां पद्ममालया। ज्योतिष्टोमफलं प्राप्य सूर्य्यलोके महीयते। द्रोणपुष्पैश्च जात्या च पूजयेद्यस्तु चण्डिकां। राजसूयफलं प्राप्य सूर्य्यलोके महीयते। शमीपुष्पेण यूथ्या च आद्यां संपूज्य श्रद्धया। गोसहस्रफलं प्राप्य विष्णुलोके महीयते॥ * ॥ अथ देवीपूजानिषिद्धपुष्पं॥ * ॥ देवीमधिकृत्य वाराहीतन्त्रे। न दद्यादर्कपुष्पञ्च रक्तमाध्यन्तथैव च। कृष्णांझिण्टीं तथोन्मत्तं रक्तकेशरमेव च। नन्द्यावर्त्तं पीतवर्णं रक्तमन्दारमेवच इति वचनेनोन्मत्तपुष्पनिषेधनमल्पस्फुटितपरं धूस्तूरैश्चातिमुक्तैश्चेति प्रागुक्तवचनात्॥ मत्स्यसूक्ते॥ वन्धूजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत्। शङ्कराणां विल्वपत्रञ्च शमीपत्रन्तथैव च। ब्रह्मणे वर्जयेत् काशं कौशम्भं शमिपुष्पकं॥ कालीतन्त्रे॥ धात्रीतमालजैः पत्रैस्तुलसी-द्वितयैस्तथा। पूजनात् पातकी तु स्याल्लग्नचापि श्रियं हरेत्। वाराहीतन्त्रे॥ त्रिपुरापूजने वर्ज्या तुलसी तु सदा बुधैः। तुलसीघ्राणमात्रेण क्रुद्धा भवति चण्डिका। अत्र तुलसीवर्ज्जनं। रात्रौ रहस्यपूजायां तुलसीं नैव दापयेदिति। तन्त्रान्तरवचनाद्रात्रिरहस्यपूजापरं। अतएव तुलसीवर्जिता पूजा न पूजा फलदा भवेदिति वाराही-

तन्त्र एवोक्तं॥ आचारकोषे। हस्तात् प्रस्खलितं क्षितौ च पतितं लग्नं तथा पादयो, र्यद्वा मुर्द्धिगतं धृतञ्च वसने नाभेरधो यद्धृतं। स्पृष्टं दुष्टजनैर्जलैरपहृतं वातेन यद्धूर्णितं, नो दद्या-द्धरये शिवाय रवये देव्यै पुनर्म्मानवः॥ अथ सूर्य्यविहित-पुष्पाणि॥ *॥ भविष्ये। करवीरे नृपैकस्मिन् ब्रह्माय विनिवेदिते। फलं दशसुवर्णस्य निस्कस्य लभते नरः। भक्त्या तु पूजयेद्‌यो ऽर्कमर्कपुष्पैः समाहितः॥ तेजसा सोऽर्कसङ्काशस्त्वार्क-लोके महीयते। मुकुराणि कदम्बानि रात्रौ देयानि भास्करे। दिवा चान्यानि पुष्पाणि दिवारात्रौ च मल्लिका। स्वयमुत्पाद्य पुष्पेण यः स्वयं पूजयेद्रविं। तानि साक्षात् प्रगृह्णाति तद्भक्त्या सततं रविः। अलाभेन तु पुष्पाणां पत्राण्यपि प्रदा-पयेत्। कुत्सितं कृमिविद्धञ्च प्रयत्नेन विवर्जयेत्। मुकुरो वकुलः॥ यामले॥ सर्व्वेषां पुष्पजातीनां प्रधानं नीलमुत्पलं। रक्तोत्पलसहस्रन्तु नीलोत्पलशतोपमं। रक्तैश्च करवीरैश्च यस्तु सम्पूजयेद्रविं। कल्पकोटिसहस्राणि कल्पकोटिशतानि च। वसेदर्कपुरे श्रीमानर्कतुल्यपराक्रमः। शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते। करवीरसमा ज्ञेया जातीवकुलपाटलाः। श्वेतमन्दारकुसुमं सितपद्मञ्च तत्समं। नागचम्पकपुन्नाग-कुसुमास्तत्समाः स्मृताः॥ देवीपुराणे॥ त्रुटिमात्रेण यो दद्यो-दाग्नेयकृतपङ्कजं। भास्करस्योत्तमाङ्गे तु तस्य पुण्यफलं शृणु। इन्द्रस्यार्द्धासने तिष्ठेद्‌यावदिन्द्राश्चतुर्दश। एवं वित्तानुसारेण फलं ज्ञेयं समासतः। येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च।

तानि पुष्पाणि देयानि भानवे लोकभानवे।, मन्त्रमहोदधौ।
श्वेतं पीतं हरेरिष्टं रक्तं रविगणेशयोः। अथ निषिद्धपुष्पं ॥*॥
आचारकोषे। मुकुलैर्नार्च्चयेद्रानुमपक्कं न निवेदयेत्। मुकुलं
कलिका। अपक्कं फलं। शातातपः। शिवे विवर्जयेत् कुन्द-
मुन्मत्तञ्च हरौ तथा। देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा।
तगरं पीततगरं। पीतकं तगरञ्चैव भानवे न निवेदयेदिति
भविष्यपुराणैकवाक्यत्वात्। मत्स्यसूक्ते। शेफालिका तु कह्लारं
शरत्काले प्रशस्यते। अन्यत्र न स्पृशेद्देवि प्रायश्चित्तन्तु
पूजनात्। शिवे विवर्जयेत् कुन्दं माघे माघ्यं प्रशस्यते।
गणेशे वर्जयेन्माघ्यमशोकं तगरन्तथा। सूर्य्ये माघञ्च मन्दारं
काणकञ्च तथैव च। महालक्ष्म्यै च तुलसीं भिण्टिकां
काञ्चनन्तथा ॥ * ॥ अथ गणेशपूजापुष्पाणि ॥ * ॥ गणेशपुराणे।
दूर्व्वां प्रकृत्य। न करोति नरो यस्तु प्रमादात्ताभिरर्च्चनं।
स चण्डालस्तु विज्ञेयो नरकान् प्राप्नुयाद्बहून्। न तन्मुखं
निरीक्षेत कदाचिदपि मानवः॥ यस्तु दूर्व्वाभिरर्च्चेत देवदेवं
गजाननं। तस्य दर्शनतोऽन्योपि पापी शुद्धिमवाप्नुयात् ॥
अलाभे बहुदूर्व्वाणामेकयैवाभिपूजयेत्। ब्रह्मवैवर्त्ते। पारि-
जातप्रसूनानां माल्यानां शतकानि च। पूजार्हाणि च पत्राणि
तुलसीवर्जितानि च। सन्ति, तस्मै गणेशाय एतान्यपि च
दापयेत् ॥ * ॥ अथ निर्म्माल्यकालः ॥ * ॥ योगिनीतन्त्रे।
करवीरमहोरात्रं विल्वपत्रन्तथैव च। जवामुकुल-माल्यञ्च
निर्म्माल्यं सार्द्ध-यामकं। माल्यं वै करवीरस्य विल्वस्य पद्मकस्य

च । यामाष्टाभिर्महेशानि ताम्बूलं दत्तमात्रतः । विष्णुधर्म्मोत्तरे । तुलसी सर्व्वदा शुद्धा तथा विल्वदलानि च । प्रहरं तिष्ठति जाती करवीरमहर्निशं । विष्णुरहस्य । दत्तमात्रं हरेः पुष्पं निर्म्माल्यं भवति क्षणात् ॥ श्रीदत्तधृतं । इतरेषान्तु पुष्पाणां पत्राणाञ्च विशेषतः । भवेद्यावदपचितिस्तदा निर्म्माल्यतां व्रजेत् । इतरेषां अनुक्तकाल-विशेषपुष्पादीनामपचितिर्गन्धापगमस्तस्मिन् सति निर्म्माल्यतेति रत्नाकरः ॥ * ॥ अथ श्राद्धविहितपुष्पाणि ॥ ब्राह्मे ॥ जाती-चम्पक-लोध्रांश्च मल्लिका-बाण-वर्व्वराः । चूताशोकाटरूषश्च तुलसी सर्ज्ज-कुब्जकं । तगरश्चैव भृङ्गारमारण्यकेतकीस्तथा । यूथिकातिमुक्तञ्च श्राद्धे दद्यात्रातो द्विजः । वर्व्वरा रामतुलसी ॥ बाणो नीलझिण्टी । आरण्यकेतकी श्वेताख्या । श्राद्धे इत्यधिकृत्य विष्णुः । सितानि च सुगन्धीनि कण्टकी जलजान्यपि । निवेदयेदित्यनुषङ्गः ॥ ब्रह्मपुराणे । शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च । गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः । तुलसी शतपत्रश्च दमनं राजचम्पकं । तगरं मारुतं पुष्पं पितॄणां दत्तमक्षयं । मारुतं गन्धपर्णीपुष्पं ॥ स्कान्दे । तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः । प्रयान्ति गरुड़ारूढ़ास्तत्पदं चक्रपाणिनः । स्मृतिसागरे । अगस्त्यं भृङ्गराजञ्च तुलसी शतपत्रिका । चम्पकं तिलपुष्पञ्च षड़ेते पितृवल्लभाः । अत्र चम्पकपदं राजचम्पकपरं प्रागुक्तब्रह्मपुराणैकवाक्यत्वात् ॥ मार्कण्डेये । पितृपिण्डार्च्चनं श्राद्धे

यैः कृतं तुलसीदलैः। प्रीणिताः पितरस्तेन यावच्चन्द्रार्क-मेदिनी। यत्तु,—तुलसीकेतकीपत्रं विल्वपत्रञ्च वर्ज्जयेत्। द्रोणञ्च करवीरञ्च धुस्तूरं किंशुकन्तथा इति स्मृत्यर्थसारवचनं तन्निर्मूलमिति हेमाद्रिः। तद्दिने श्राद्धकर्त्राहृततुलसीपर-मित्यपरार्कः। केतकीपदमारण्यकेतकीतरपरं प्रागुक्तवचनात्, करवीरवर्जनं वृद्धिश्राद्धपरं, वक्ष्यमाणयोगिनीतन्त्रात्। हेमाद्रि-धृतवायुभविष्ययोः। सुकुमारैः किशलयैर्यवदूर्व्वाङ्कुरैरपि। सम्पूजनीयाः पितरः श्रेयस्कामेन सर्व्वदा। श्राद्धे जात्यः प्रशस्ताः स्युर्म्मल्लिका श्वेतयूथिका। जलोद्भवानि सर्व्वाणि कुसुमानि च चम्पकमिति॥ *॥ अथ तत्र जाती-पुष्पदान-विचारः। ब्रह्मपुराणे। जाती-दर्शनमात्रेण निराशाः पितरो गता इति जातीपदं पीतजातीपरमिति श्राद्धचिन्ता-मणिः। जात्यां विकल्प इति हेमाद्रिः। निषेधस्तु पिण्ड-परः। कुसुम्भं शम्भौ नो दद्यान्नाम्नं गरुड़ध्वजे। पिण्डे जातीञ्च नो दद्यान्नारीरक्तमर्येदिति वचनान्तरादिति बोपदेवः। जात्यः सर्व्वाश्च दातव्या मल्लिका श्वेतयूथिका इति श्राद्धप्रदीपधृतविष्णुधर्म्मोत्तरं। जात्यः मालत्य इति श्राद्ध-कौमुदी। जातीति रक्तजातीपरमिति तत्त्वकारः। अथ वर्जनीयपुष्पाणि। ब्रह्माण्डे। जवादिकुसुमं भिण्टी रूपिकामकुरुण्टकाः। पुष्पाणि वर्ज्जनीयानि श्राद्धकर्म्मणि नित्यशः। जवा ओड्रपुष्पं। आदिशब्देनान्य रक्तवर्णमल्ला-नादिकं परिगृहीतं, रूपिका अर्कपुष्पं। कुरुण्टकं पीता-

स्नानं। आह इत्यधिकृत्य शङ्खः,—उग्रगन्धीन्यगन्धीनि चै
वृक्षोद्भवानि च। पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि
जलोद्भवानि देयानि रक्तान्यपि विशेषतः। अङ्गिराः। न जा
कुसुमं दद्यात् कदली-पत्रमेव च। स्मृतिसागरे। कद
करवीरञ्च वकुलं कुन्दकन्तथा। पाटलाञ्चैव जाति
प्रयत्नेन विवर्जयेत्। तथा कोद्रवकोद्दारकपित्थमधुकानि
एतान्यपि न देयानि पितृभ्यः श्राद्धकर्म्मणि। कु
किञ्चिद्रक्तान्वितं, उद्दारः काञ्चनः। कपित्थमधुके स्वन
प्रसिद्धे। अतसी शणः। भविष्ये। एकोद्दिष्टे पुण्डरीकं त्रि
श्राद्धे च मारुतं। सर्व्वश्राद्धे दमनकं तगरं प्रेतश्राद्धके। अ
नक्तकशाकञ्च पक्वानि च कुरुण्टकं। जातीकल्हारको
पर्व्वश्राद्धे विवर्जयेत्। योगिनीतन्त्रे। कुसुमं ...
शोकं मालती-कुसुमन्तथा। वृद्धिश्राद्धे पङ्कजञ्च ...
विवर्जयेत्। मधुमाधव-घृत-भविष्ये। ... स्फु...
न दद्यात्तु कदाचन। दानं चायुःक्षयं विद्यात् ... 
मन्दिरं। वृहत् आक्रमे। पञ्चदेवमयं पुष्पं करवीरं म
हरं। विष्णुर्लम्बोदरः सूर्यो ब्रह्मा च कालिका तथा। 
देवाः पञ्चदले सदा तिष्ठन्ति नान्यथा। जवापुष्पं महेशा
करवीरापराजिता। महादेवे निवेद्यैव कोटिपूजाफ
लभेत्। करवीरं यथा देवि जवापुष्पन्तथैव च। यथा शु
तथा रक्तं हरितं कृष्णमेव च। गङ्गादिसर्व्वतीर्थानि तिष्ठ
विन्दुगह्वरे। तन्मध्ये शिवलिङ्गञ्च महाकुण्डलिनीयु

गह्वरं विन्दुरूपञ्च कैवल्यपदमुत्तमं। शिवशक्तिमयं पुष्पं चतुर्व्वर्गफलप्रदं। सर्व्वपुष्पाणि चैकत्र जवाजपारिजातकैः। न समं जायते देवि लक्षकोटिशतैरपि। यत्रापराजितापुष्पं करवीरं जवापि च। तिष्ठन्ति तत्र वै देवा ब्रह्मविष्णुमहेश्वराः। गङ्गादि-सर्व्वतीर्थानि तन्मूले निवसन्ति वै। तन्मूले सिद्धये-दयस्तु पूजितास्तेन देवताः। अपराजिताया माहात्म्यं न वक्तुं शक्यते मया। अभावे करवीरस्य तत्पत्रैरर्च्चयेद्धरिं। तद-भावे महेशानि करवीरेति त्रिः पठेत्। त्रिरुच्चारणतो देवि करवीरेति नामतः। यथा मे जायते प्रीति र्नतथा लक्षजापतः। पुरश्चरणोल्लासे। करवीरं जवा देवि स्वयं काली न चान्यथा। तारा च अपरा चैव स्वयं त्रिपुर-सुन्दरी। कृष्णापराजिता साक्षात् भद्रकाली न संशयः। करवीरश्च भुवना द्रोणं च भुवनेश्वरी। जवा साक्षाद्भगवती सर्व्वविद्यास्वरूपिणी। ये साधका उत्गन्धातरश्च यन्ति शिवप्रियां। एतैश्च कुसुमै-श्चण्डि स शिवो नात्र संशयः। किं जपैः किं तपोभिर्व्वा किं दानैर्व्वा किमध्वरैः। येनार्च्चिता जगद्धात्री द्रोणकृष्णा-परादिभिः। राजसूयाश्वमेधैर्व्वा वाजपेयाग्निहोत्रकैः। फलं यज्जायते चण्डि तत्सर्व्वं कुसुमार्च्चनात्॥ १२॥ अथ धूपः। कालिकापुराणे। नासाक्षिवक्त्रसुखदः सुगन्धोऽति मनोहरः। दह्यमानस्य काष्ठस्य प्रयतस्येतरस्य वा। पुन्नागस्याथवा धूपो निस्तापो यस्य जायते। स धूप इति विज्ञेयो देवानां तुष्टि-दायकः। भविष्ये। अगुरुधूपमावेद्य वाजपेयफलं लभेत्।

सितागुरुं नरो दत्त्वा गोसहस्रफलं लभेत्। महिषाख्यं घृताक्तञ्च दग्ध्वा बिल्वमथापि वा। वाजपेयफलं प्राप्य सूर्य्यलोके महीयते। सर्व्वेषामेव धूपानां दुर्गाया गुग्गुलुः प्रियः। घृतयुक्तो विशेषेण सततं प्रीतिवर्द्धनः। शारदायां—अगुरुशीरगुग्गुलु-शर्करामधुचन्दनैः। धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः। प्रपञ्चसारे। सगुग्गुल्वगुरूशीर-सिताज्यमधुचन्दनैः। साराङ्गारविनिक्षिप्तैः कल्पयेद्धूपमुत्तमं। क्रियायोगसारे। नारायणाय यो धूपं दद्याद्गुग्गुलुवासितं। स याति परमं धाम दुर्लभं यत् सुरैरपि। योगिनीतन्त्रे। कृष्णागुरुसकर्पूरं चन्दनं सिह्लकन्तथा। भगवत्यै नरो यस्तु इष्टं दत्त्वा महेश्वरि। इह कामानवाप्नोति दुर्गालोके महीयते। कालिकापुराणे। न वृक्षधूपं वितरेन्माधवाय कदाचन। न भूमौ वितरेद्धूपं नासने न घटे तथा। अथ दीपः। उत्कलखण्डे। सगुग्गुल्वगुरूशीरसिताज्यमधुचन्दनैः। धूपं दद्यात् सुगन्धाढ्यं दीपं गोसर्पिषं शुभं। कर्पूरगर्भया वर्त्त्या तिलतैलेन वा ददेत्। शारदायां। न मिश्रीकृत्य दद्यात्तु दीप-स्नेहान् घृतादिकान्। कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत्। प्रपञ्चसारे। गोसर्पिषा वा तैलेन वर्त्त्या च लघुगर्भया। दीपित सुरभि-दग्धं दीपमुच्चैः प्रदापयेत्। दीपं प्रज्वालयेच्छक्तो कर्पूरेण घृतेन वा। गव्येन तच्चासामर्थ्ये तैलेनापि सुगन्धिना। शारदा-कल्पे। सघृतं गुग्गुलुं धूपं दीपं गोघृतदीपितं। समस्त-परिवाराय हरये श्रद्धयार्पयेत्। विष्णुधर्म्मोत्तरे। नीलरक्ता

दग्धं दीपं प्रयत्नेन विवर्जयेत्। कालिकापुराणे। दीप-वृक्षाश्च कर्त्तव्यास्तैजसाद्यैश्च भैरव। वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन। १४॥ अथ नैवेद्यं॥ उत्कलखण्डे। अखण्डितं समद्यौत-शालितण्डुलनिर्म्मितं। सुगन्धमन्नं सुरभि सर्पिषा च सुवासितं। सौरभेयदधिक्षीरपक्करम्भाशितायुतं। नानाव्यञ्जनसङ्कीर्णं सोपदंशं सपूपकं। नानाफलयुतं हृद्यं सुगन्धं सुरसं नवं। नैवेद्यं देवदेवस्य प्रश्यादूनं न शस्यते। नारसिंहे। हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करं। निवेद्य नरसिंहाय यावकं पायसन्तथा। समास्तण्डुलसंख्याया यावत्यस्तावतीर्नृप। विष्णुलोके महाभोगान् भुञ्जानास्तेषु वैष्णवाः। प्रपञ्चसारे। सुशितेन सुसिद्धेन पायसेन ससर्पिषा। सितोदनं सकदलीदध्याद्यैश्च निवेदयेत्॥ *॥ अथ नमस्कारः। कालिकापुराणे। कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः। नमस्कारस्तु तत्त्वज्ञैरुत्तमाधममध्यमाः। आगमे। चिवुकेन तथोष्ठेन नासया हनुना दृशा। ब्रह्मरन्ध्रेण कर्णाभ्यां प्रणामोऽष्टाङ्ग ईरितः। नारसिंहे। नमस्कारः स्मृतो यज्ञः सर्व्वयज्ञेषु चोत्तमः। नमस्कारेण चैकेन अष्टाङ्गेन हरिं विशेत्। स्कन्दपुराणे। दण्डप्रणामं कुरुते विष्णवे भक्ति-भावतः। रेणुसंख्यं वसेत् स्वर्गे मन्वन्तरशतं नरः॥ वाराहे। वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत मां। श्वेत्री संजायते मूर्खः सप्तजन्मनि भामिनि॥ १६॥ अथ ताम्बूलं। मत्स्यसूक्ते। पथवास्तु गुवाकञ्च कृत्वापर्णसमन्वितं। शङ्खशम्बूकचूर्णेण

देव्यै भक्त्या निवेदयेत्। कर्पूरवासितं देवि मृगदर्पसमन्वितं। धन्याकमधुरिकाद्यैः साधितन्तु निवेदयेत्। एला चम्पक-मुस्ताद्यैर्मुखवासः प्रशस्यते। शस्तं प्रस्तरचूर्णञ्च देवे पैत्रे च कर्म्मणि। शङ्खशम्बूकशुक्तीनां चूर्णं दत्त्वा पतत्यध इति स्मृतिवचने शङ्खादिचूर्णवर्जनन्तु देवीतरविषयं। मत्स्यसूक्ते। कपर्द्दकस्य वृक्षस्य पलाशस्य च शङ्करि। तच्चूर्णं वर्जयेद्देवि वृक्षपर्णं न दापयेत्॥ मदनपारिजाते योगियाज्ञवल्क्यः। दद्यात् पुरुषसूक्तीयैः पत्रपुष्प एव च। अर्च्चितं स्यात् जगदिदं तेन सर्व्वं चराचरं। ऋष्यादि स्मरणं कृत्वा न्यसेत् मन्त्रान् स्वविग्रहे। प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे। तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्। पञ्चमीं वामजानौ च षष्ठीं वै दक्षिणे न्यसेत्। सप्तमीं वामकुक्षौ तु अष्टमीं दक्षिणे न्यसेत्। नवमीं नाभिमध्ये तु दशमीं हृदये तथा। एकादशीं कण्ठदेशे वामबाहौ ततःपरं। चतुर्दशीं दक्षिणे तु आस्यदेशे चतुर्द्दशीं। अक्ष्णोः पञ्चदशीञ्च षोडशीं मूर्द्ध्नि संन्यसेत्। एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत्। आद्यया वाहयेद्देवमृचा तु पुरुषोत्तमं। द्वितीययासनं दद्यात् पाद्यञ्चैव तृतीयया। अर्घ्यश्चतुर्थ्या तु तथा पञ्चम्याचमनीयकं। षष्ठ्या स्नानं प्रदातव्यं सप्तम्या वस्त्रमेव च। यज्ञोपवीतमष्टम्या नवम्या त्वनुलेपनं। पुष्पं दशम्या दातव्यमेकादश्या तु धूपकं। द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनं। चतुर्द्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणं।

अर्चयित्वा तु देवेशं षोड़श्या च विसर्ज्जनं। स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकं। एवमितरेषामपि ब्रह्मादीनां पूजनं कार्य्यं तत्तत् प्रकाशकैर्व्वैदिकमन्त्रैस्तदशक्तौ तत्तन्नामधेय-मन्त्रैर्नमोन्तैः पूजयेदिति मदनपारिजातः। पुरुषसूक्तमन्त्राश्च मठादिप्रतिष्ठातत्त्वेऽनुसन्धेयाः ॥ * ॥ अथ शालग्रामलक्षणं। गौतमीये। गण्डक्याश्चैकदेशे च शालग्रामस्थलं महत्। पाषाणं तद्भवं यत्तच्छालग्राममिति स्मृतं। स्कान्दे। स्निग्धा सिद्धिकरी मन्त्रे कृष्णा कीर्त्तिं ददाति च। पाण्डरा पाप-दहनी पीता पुत्रफलप्रदा। नीला सन्दिशते लक्ष्मीं रक्ता रोगप्रदायिका। रूक्षा चोद्वेगदा नित्यं वक्रा दारिद्र्य-दायिका। स्थूला निहन्ति चेवायुर्निष्फला तु अलाञ्छिता। कपिला कर्बुरा भग्ना बहुचक्रैकचक्रिका। बृहन्मुखी बृहच्चक्रा लग्नचक्राथवा पुनः। बद्धचक्राथवा वा स्याद्भग्नचक्रात्वधो-मुखी। पूजयेद् यः प्रमादेन दुःखमेव लभेत सः। दोषाश्चैते प्रशस्तचक्रलाभविषया, अलाभे तु रक्तादयोऽपि पूज्याः। खण्डितं त्रुटितं भग्नं शालग्रामो न दोषभाक्। मुख्या स्निग्धादय-स्तत्रामुख्या रक्तादयो मताः। मुख्याभावेत्वमुख्यापि पूज्या इत्युच्यते परैरिति स्कन्दपुराणात्। ब्राह्मे। निवसामि सदा ब्रह्मन् शालग्रामाख्यवेश्मनि। शालग्रामस्य चक्राङ्क-भेदे नामानि मे शृणु। अत्र नाम्नामानन्त्यचिह्नसाङ्कर्य्येण निर्णेतु-मशक्यत्वादाह्निकपूजादौ तत्तन्नामकल्पितमन्त्रविशेषप्रयोग-विशेषभावाच्च न संग्राह्यत्वमिति तत्प्रकाशकवचनानि ग्रन्थ-

गौरवभयान्न लिखितानि। स्कान्दे। शालग्रामशिलायां यो मूल्यमुद्घाटयेन्नरः। विक्रेता चानुमन्ता च यः परीक्षामुदीरयेत्। सर्व्वे ते नरकं यान्ति यावदाहूतसंप्लवं। अतः संवर्ज्जयेद्विप्र चक्रस्य क्रयविक्रयं। शालग्रामशिलायान्तु प्रतिष्ठा नैव विद्यते। महापूजान्तु कृत्वादौ पूजयेत्तां ततो बुधः। पाद्मे। शालग्रामशिलाग्रे तु यः श्राद्धं कुरुते नरः। पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि। शालग्रामशिला यत्र तत्तीर्थं योजनत्रयं। तत्र दानं तपो होमः सर्व्वं कोटिगुणं भवेत्। शालग्रामसमीपे तु क्रोशमात्रं समन्ततः। कीकटोऽपि मृतो याति वैकुण्ठभुवनं नरः। शालग्रामशिलापूजां विना योऽश्नाति किञ्चन। स चण्डालादिविष्ठायामाकल्पं जायते कृमिः। स्कान्दे। स्कन्धे धृत्वा तु योऽध्वानं वहते शैलनायकं। तेनोढन्तु जगत्सर्व्वं त्रैलोक्यं सचराचरं। भक्त्या वा यदि वाऽभक्त्या चक्रं पूजयते नरः। अपि चेत् सुदुराचारो मुच्यते नात्र संशयः। गौरवाचलशृङ्गाग्रैर्भिद्यते तस्य तनुः। न मतिर्जायते यस्य शालग्रामशिलार्च्चने। ब्राह्मणस्यैव पूज्येयं शुचेरप्यशुचेरपि। स्त्रीशूद्रकरसंस्पर्शो वज्रादपि सुदुःसहः। प्रणवोच्चारणाच्चैव शालग्रामशिलार्च्चनात्। ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतामियात् ॥ * ॥ अथ द्वारवतीशिला ॥ * ॥ कपिलपञ्चरात्रे। एकचक्रस्तु पाषाणो द्वारवत्याः सुशोभनः। सुदर्शनाभिधेयोऽसौ मोक्षैकफलदायकः। लक्ष्मीनारायणो द्वाभ्यां भक्तिमुक्तिप्रदायकः। त्रिभिश्चाच्युतरूपोऽसौ फलमैन्द्रं

प्रयच्छति। चतुर्भुजश्चतुश्चक्रश्चतुर्वर्गफलप्रदः। पञ्चभिर्वासुदेवश्च जन्ममृत्युभयापहः। षड्भिः प्रद्युम्न एवासौ लक्ष्मीं कान्तिं ददाति सः। सप्तभिर्बलभद्रोऽसौ गोत्रकीर्त्तिविवर्द्धनः। ददाति वाञ्छितं सर्व्वमष्टाभिः पुरुषोत्तमः। नवचक्रो नृसिंहस्तु फलं यच्छत्यनुत्तमं। राज्यप्रदो दशभिस्तु दशावतारकः स्मृतः। एकादशभिरैश्वर्य्यमनिरुद्धः प्रयच्छति। निर्व्वाणं द्वादशात्मासौ सौख्यदश्च सुपूजितः। प्रह्लादसंहितायान्तु—अन्येषु बहुचक्रेषु अनन्तः परिकीर्त्तित इत्यधिकं॥ अथ वर्णादिभेदेन गुणदोषाः कपिलपञ्चरात्रे। कृष्णो मृत्युप्रदो नित्यं धूम्रश्चैव भयावहः। अस्वास्थ्यं कर्व्वुरो दद्यान्नीलस्तु धनहानिदः। छिद्रो दारिद्र-दुःखानि दद्यात् संपूजितो ध्रुवं। पाटलस्तु महद्दुःखं भग्नो भार्य्यावियोगदः। पुत्रपौत्रधनैश्वर्य्यसुखमत्यन्तमुत्तमं। ददाति शुक्लवर्णस्तु तस्मादेनं समर्च्चयेत्॥ * ॥ अथ शालग्रामजल-माहात्म्यं॥ * ॥ आचारादर्शे। गङ्गा-प्रयाग-गयनैमिष-पुष्कराणि, पुण्यानि यानि कुरुजाङ्गलयामुनानि। कालेन तीर्थसलिलानि पुनन्ति पापात्, पादोदकं भगवतः प्रपुनाति सद्यः॥ छिन्नस्तेन सहासेन गर्भवासं सुदारुणं। पीतं येन सहासेन शालग्रामशिलाजलं। यज्ञादौ यज्ञमध्ये वा यज्ञान्ते च सुरेश्वरि। विष्णुपादोदकं ग्राह्यं चौरखां न प्रपतेद्यदि। पाद्मे। ये पिबन्ति नरा नित्यं शालग्रामशिलाजलं। कोटि-तीर्थसहस्रैस्तु सेवितैः किं प्रयोजनं। दहन्ति नरकान् सर्व्वान् गर्भवासञ्च दारुणं। पीतं यैस्तु सदा नित्यं शालग्रामशिला-

जलं। शालग्रामशिलातोयं विन्दुमात्रन्तु यः पिवेत्। सर्व्व-पापैः प्रमुच्येत मुक्तिमार्गे कृतोद्यमः। पावनं सर्व्वतीर्थेभ्यो हत्या-कोटिविनाशनं। धृते शिरसि पीते च सर्व्वास्तुष्यन्ति देवताः। विष्णोः पादोदकं पातं कोटिहत्याघ-नाशनं। तदेवाष्टगुणं पापं भूमौ विन्दुनिपातनात्। कृष्णपादाब्जतीर्थञ्च वैष्णवेभ्यः प्रदाय हि। स्वयं भक्त्याभिवन्द्यादौ पीत्वा शिरसि धारयेत्। शालग्रामशिलातोयं यः पिवेद्विन्दुमात्रकं। मातु-स्तन्यं पुनर्नैव स पिवेन्मुक्तिभाङ् नरः। वृहद्विष्णुपुराणे। तीर्थाधिकं यज्ञशताच्च पावनं, जलं सदा केशव-दृष्टिसंस्थितं। छिनत्ति पापं तुलसीविमिश्रितं, विशेषतश्चक्रशिलाविनिर्गतं। पादोदकेन देवस्य हत्यायुतसमन्वितः। शुध्यते नात्र सन्देह-स्तथा शङ्खोदकेन च॥ * ॥ अथ प्रार्थनामन्त्रस्तत्रैव। कृष्ण कृष्ण महावाहो भक्तानामार्त्तिनाशन। सर्व्वपापप्रशमनं पादोदकं प्रयच्छ मे॥ * ॥ अथ विष्णुपादोदकपाने वैदिक-मन्त्रौ ब्राह्मणसर्व्वस्वे। ओँ चरणं पवित्रं विततं पुराणं येन पूतास्तरन्ति दुष्कृतानि तेन पवित्रेण शुद्धेन पूता अति पाप्मान-मरातिं तरेम। ओँ लोकस्य द्वारमर्च्चयत् पवित्रं ज्योतिष्मत् विभ्राजमानं महस्तदमृतस्य धारा वहुधा दोहमानं चरणं लोके सुधितां दधातु हरिर्विष्णुः। भगवन् पवित्र वासुदेव पवित्र सहस्रधारमपरिमित कमलाकान्त वासुदेव पुनीहि स्वाहा। इमं मन्त्रं समुच्चार्य्य सर्व्वदुष्टग्रहापहं। प्राश्नीयात् प्रोच्चयेद्देहं पुत्रमित्र-परिग्रहं॥ अथ धारणमन्त्रः॥ अकाल-

मृत्युहरणं सर्व्वव्याधिविनाशनं। विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहं। स्कान्दे। विष्णोः पादोदकं पीत्वा पश्चादशुचिशङ्कया। आचामति च यो मोहाद् ब्रह्महा स निगद्यते। शालग्रामशिलातोयं हस्ते कृत्वा तु यः पिवेत्। इह जन्मनि दारिद्रामन्ते च नरकं व्रजेत्॥ * ॥ अथ शिवलिङ्ग-पूजनं॥ स्कन्दपुराणे। विना लिङ्गार्च्चनं यस्य कालो गच्छति नित्यशः। महाहानिर्भवेत्तस्य दुर्गतस्य दुरात्मनः। सर्व्वमन्यत् परित्यज्य क्रियाजालमशेषतः। भक्त्या परमया विद्वान् लिङ्गमेवं प्रपूजयेत्। मातृकाभेदतन्त्रे। चतुर्धा पार्थिवं लिङ्गं मृत्स्नाभेदेन पार्व्वति। शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि। शुक्लन्तु ब्राह्मणे शस्तं चाचिये रक्तमिष्यते। पीतन्तु वैश्यजातौ स्यात् कृष्णं शूद्रे प्रकीर्त्तितं। मृत्तिका-विशेषालाभे तु यया कयापि मृत्तिकया लिङ्गघटनं कार्य्यं। येषु स्थानेषु ये देवा येषु स्थानेषु ये द्विजाः। येषु स्थानेषु यत्तोयं या तु यत्रैव मृत्तिका। सापि तत्र प्रशस्ता स्यात्तेषु कृत्यं विधीयते इति मरीचिवचनस्य यथायोग्यकारकं शक्ति-विवक्षया योजनीयत्वात्। विश्वसारतन्त्रे। मृत्तिकातोलकं ग्राह्यमथवा तोलकद्वयं। त्रिसूत्रस्य प्रमाणेन घटनं कारयेद्-बुधः। स्वाङ्गुष्ठपर्व्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत्। मृत्तिका-लिङ्गघटने प्रमाणं परिकीर्त्तितं। फलमुक्तमवाप्नोति अन्यथा चेत्तदन्यथा। पार्थिवे शिवपूजायां सर्व्वसिद्धियुतो भवेत्। पाषाणे शिवपूजायां द्विगुणं फलमीरितं। पद्मपुराणे।

पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकं। चन्द्रकान्तं मृत्युजित् स्याद्वाटकं सर्व्वकामदं। वीरमित्रोदयधृतकालोत्तरे। अन्येषां कोटिलिङ्गानां पूजने यत् फलं लभेत्। तत्फलं लभते मर्त्यो बाणलिङ्गैकपूजनात्। बाणलिङ्गं तथा श्रेयं भुक्तिमुक्तिप्रदायकं। उत्पत्तिं बाणलिङ्गस्य लक्षणं शेषतः शृणु। नर्म्मदा देविकायाश्च गङ्गायमुनयोस्तथा। सन्ति पुण्यनदीनाञ्च बाणलिङ्गानि षन्मुख। इन्द्रादि-पूजितान्यत्र तच्चिह्नैश्चिह्नितानि च। सदा सन्निहितस्तत्र शिवः सर्व्वार्थदायकः॥*॥ अथ बाणलिङ्गपरीक्षा॥*॥ तत्रैव—त्रिःसप्तपञ्चवारं वा तुलासाम्यं न जायते। तदा बाणं समाख्यातं शेषं पाषाणसम्भवं। तुलाकरणन्तु—तण्डुलेनैव. अपरतुलादिषु तण्डुला यद्यधिकाः स्युस्तदा तल्लिङ्गं गृहिणां पूज्यं, लिङ्गञ्चेदधिकं तदोदासीन-पूज्यमिति लक्षणकाण्डे हेमाद्रिः। सूतसंहितायान्तु। समक्रत्वस्तुलारूढं वृद्धिमेति न क्षीयते। बाणलिङ्गमिति ख्यातं शेषं नार्म्मदमुच्यते। त्रिपञ्चवारं यस्यैव तुलासाम्यं न जायते। तदा बाणं समाख्यातं शेषं पाषाणसम्भवं। वीरमित्रोदये। नद्यां वा प्रक्षिपेद्भूयो यदा तदुपलभ्यते। बाणलिङ्गं तदा विद्धि न्यूनं सुख-विवर्द्धनं। भविष्ये। बाणलिङ्गानि राजेन्द्र स्थितानि भुवन-त्रये। न प्रतिष्ठा न संस्कारस्तेषामावाहनं न च॥*॥ अथ तुलसीमाहात्म्यं। गारुड़े। प्रयागस्नाननिरतौ काश्यां प्राण-विमोक्षणे। यत्फलं विहितं देवैस्तुलसीपूजनेन तत्।

तुलसी रोपिता सिक्ता दृष्टा स्पृष्टा च पावयेत्। आराधिता प्रयत्नेन सर्व्वकामफलप्रदा। प्रदक्षिणं भ्रमित्वा ये नमस्कुर्व्वन्ति नित्यशः। न तेषां दुरितं किञ्चिदक्षीणमवशिष्यते। सेचनमन्त्रस्तु पाद्मे। तुलसि वल्लभे देवि विष्णु-भक्ति-परायणि। स्नापयामि जगद्धात्रि सर्व्वशत्रुविनाशिनि। दर्शनमन्त्रोऽपि तत्रैव। देवि विष्णुप्रिये मातस्तुलसि प्रियदर्शने। हरि-दर्शन-दोषाख्यां प्रमोद द्विजवल्लभे। नमस्कारमन्त्रोऽपि—विष्णु-प्रीतिकरि मातर्नमस्ते तुलसीश्वरि। पवित्रीकुरु मेऽङ्गानि विष्णुञ्च हर्षकारिणि। स्कान्दे। प्रागदत्त्वार्घ्यं ततोऽभ्यर्च्य गन्धपुष्पाक्षतादिना। अर्घ्यमन्त्रस्तत्रैव। श्रीं श्रियः प्रिये-श्रियावासे नित्यं श्रीधर-सत्कृते। भक्त्या दत्तं मया देवि अर्घ्यं गृहाण नमोऽस्तु ते। पूजामन्त्रोऽपि। निर्म्मिता त्वं पुरा देवै रर्च्चिता त्वं सुरासुरैः। तुलसि हर मे पापं पूजां गृहाण नमोऽस्तु ते। पाद्मे। पक्षे पक्षे तु सम्प्राप्ते द्वादश्यां वैश्य-सत्तम। ब्रह्मादयोऽपि कुर्व्वन्ति तुलसीवनपूजनं। न धात्रीसफला यत्र न विष्णुस्तुलसीवनं। तत्श्मशानसमं स्थानं सन्ति यत्र न वैष्णवाः। तुलस्यारोपणं कार्य्यं श्रावणे च विशेषतः। अप-राधसहस्राणि क्षमते पुरुषोत्तमः। तुलसी-गन्धमाघ्राय यत्र गच्छन्ति मारुताः। दिशो दश च पूताः स्युर्भूतग्रामश्चतुर्विधः। काशीखण्डे। तुलस्यलङ्कृता ये वै तुलसी-नाम-जापकाः। तुलसीवनपाला ये ते त्याज्या दूरतो भटाः। तथा—तुलसी यत्र भवने प्रत्यहं परिपूज्यते। तद्गृहं नोपसर्पन्ति कदाचिद्यम-

किङ्कराः। पाद्मे। न पश्यन्ति यमं वैश्य तुलसी-वन-रोपणात्। सर्व्वपापहरं सर्व्वकामदं तुलसीवनं। वृहन्नारदीये। कण्टकावरणं वापि व्रतं काष्ठैः करोति यः। तुलस्याः, शृणु राजेन्द्र तस्य पुण्यफलं महत्। यावद्दिनानि संतिष्ठेत् कण्टकावरणं प्रभो। कुलत्रययुतस्तावत्तिष्ठेद्-ब्रह्मपदे युगं। रोपितां तुलसीं दृष्ट्वा नरेण भुवि भूमिप। विवर्णवदनो भूत्वा तल्लिपिं मार्जयेद्यमः। तुलसी-सन्निधौ प्राणान् ये त्यजन्ति मुनीश्वराः। न तेषां नरकक्लेशाः प्रयान्ति परमं पदं॥ *॥ अथ तुलसी-मृत्तिका-काष्ठादि-माहात्म्यं। स्कान्दे। तुलसीमृत्तिकालिप्तो यदि प्राणान् परित्यजेत्। यमेन नेक्षितुं शक्तो युक्तः पापशतैरपि। शिरसि क्रियते यस्तु तुलसी-मूलमृत्तिका। विघ्नानि तस्य नश्यन्ति सानुकूला ग्रहास्तथा। तुलसीमृत्तिका यत्र काष्ठं पत्रञ्च वेश्मनि। तिष्ठति मुनिशार्दूल निश्चलं वैष्णवं पदं। विष्णुधर्म्मोत्तरे। होमं कुर्व्वन्ति ये विप्रास्तुलसी काष्ठ-वह्निना। तेषां तत्र भवेत् पुण्यमग्निष्टोम शतोद्भवं। नैवेद्यं पचति यस्तु तुलसी-काष्ठवह्निना। मेरुतुल्यं भवेदन्नं तद्दत्तं केशवाय हि। तीर्थं यदि न सम्प्राप्तं स्मृतिर्व्वा कीर्त्तनं हरेः। तुलसीकाष्ठदग्धस्य मृतस्य न पुनर्भवः। यद्येकं तुलसीकाष्ठं मध्ये काष्ठस्य यस्य हि। दाहकाले भवेन्मुक्तिः पापकोटि-युतस्य च। जन्मकोटि-सहस्रैस्तु तोषितो यैर्जनार्द्दनः। दह्यन्ते ते जना लोके तुलसीकाष्ठवह्निना। गारुड़े। मुखे तु

तुलसीपत्रं दृष्ट्वा शिरसि कर्णयोः। कुरुते भास्करिस्तस्य दुष्कृतस्य तु मार्जनं। स्कान्दे। यस्याः स्मरणमात्रेण दर्शनात् कीर्त्तनादपि। विलयं यान्ति पापानि किं पुनर्विष्णुपूजनात्। अमृतादुत्थिता धात्री तुलसी विष्णुवल्लभा। स्मृता संकीर्त्तिता ध्याता प्राशिता सर्व्वकामदा। धात्रीफलञ्च तुलसी मृत्युकाले भवेद्यदि। मुखे यस्य शिरे देहे दुर्गतिर्नास्ति तस्य वै। अथ धात्रीमाहात्म्यं॥ * ॥ स्कान्दे। धात्रीछायां समाश्रित्य योऽर्च्चयेच्चक्रपाणिनं। पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति मानवः। धात्रीछायान्तु संस्पृश्य कुर्य्यात् पिण्डञ्च यो मुने। मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य च। मूर्द्धि्न प्राणे मुखे चैव देहे च मुनिसत्तमे। धत्ते धात्रीफलं यस्तु स महात्मा सुदुर्लभः। धात्रीफलविलिप्ताङ्गो धात्रीफल-विभूषितः। धात्रीफल-कृताहारो नरो नारायणो भवेत्। यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने। प्रियो भवति देवानां मनुष्याणां हि का कथा। यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽपि दुष्टधीः। पुनाति सकलान् लोकान् धात्रीफलदलान्वितः। धात्रीफलानि यो नित्यं वहते करसम्पुटे। तस्य नारायणो देवो वरमेकं प्रयच्छति। धात्रीफलञ्च भोक्तव्यं कदाचित् करसम्पुटात्। यशः श्रियमवाप्नोति प्रसादाच्चक्रपाणिनः। धात्रीफलञ्च तुलसी मृत्तिका द्वारकोद्भवा। सफलं जीवितं तस्य त्रितयं यस्य वेश्मनि। धात्रीफलैस्तु संमिश्रं तुलसीदलवासितं। पिवति वहते यस्तु तीर्थकोटिफलं लभेत्। यस्मिन्

गृहे भवेत्तोयं तुलसीदलवासितं। धात्रीफलैश्च विप्रेन्द्र गाङ्गेयैः किं प्रयोजनं। तुलसीदल-नैवेद्यं धात्र्या यस्य फलं गृहे। कवचं वैष्णवं तस्य सर्व्वपापप्रणाशनं। ब्रह्मपुराणे। धात्रीफलानि तुलसी ह्यन्तकाले भवेद्यदि। मुखे चैव शिरस्यङ्गे पातकं नास्ति तस्य वै। धर्म्मपुराणे। मुखोदरे तु तुण्डे वा मृतस्य चिवुकेऽपि वा। तिष्ठेद्धात्रीफलं यस्य स याति विष्णुमन्दिरं। धात्रीफलेन नैवेद्यं यो ददातीह माधवे। तस्य तुष्टो भवेद्विष्णुर्नान्यैः क्रतुशतैरपि। धात्रीद्रवेण सितत्वं यस्य केशा व्रजन्ति च। न पिवेत् स स्तनं मातुः कदाचिद्वै षड़ानन। या गतिर्ज्ञानिनां स्कन्द मुनीनां योगसेविनां। तां गतिं समवाप्नोति धात्रीसेवा-रतेन च॥ अथ धात्रीजल-दानमन्त्रः॥ स्कान्दे। पिता पितामहाश्चान्ये अपुत्रा ये च गोत्रिणः। वृक्षयोनिंगता ये च ये च कीटत्वमागताः। रौरवे नरके ये च महारौरवसंज्ञके। तिर्य्योनिञ्च गता ये च ये च ब्रह्माण्डमध्यगाः। पिशाचत्वं गता ये च ये च प्रेतत्वमा[illegible]ाः। ते पिवन्तु मया दत्तं धात्रीमूले सदा पयः। ते सर्व्वे तृप्तिमायान्तु धात्रीमूलनिषेचनात्। प्रणाममन्त्रस्तु वृहद्धर्म्मपुराणे। नमाम्या-मलकीं देवीं पत्रमालास्वलङ्कृतां। शिव-विष्णु-प्रियां दिव्यां श्रीमतीं सुन्दरप्रभां। अथ धात्रीस्नानभक्षणनिषेधस्तत्रैव। यस्तु स्नाति तदश्नाति धात्रीञ्च रविवासरे। आयुर्वित्तं कलत्रञ्च वंशस्तस्य विनश्यति। संक्रान्त्याञ्च भृगोर्व्वारे षष्ठ्यां प्रतिपदि ध्रुवं। नवम्यांवाप्यमावस्यां धात्रीं दूरात् परित्यजेत्।

संक्रान्त्यां च भवेद्रोगी अलक्ष्मीर्भृगुवासरे। अनपत्यस्तथा षष्ठ्यां नवम्यामायुषः क्षयं। दर्शे धात्री समायोगात् सर्व्वं नाशं विनिर्द्दिशेत्॥ पाद्मे—द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके। लुनाति स नरो गच्छेन्निरयानति गर्हितान्॥

॥ * ॥ अथाश्वत्थमाहात्म्यं ॥ * ॥ धर्म्मपुराणे—स्नात्वाश्वत्थं स्पृशेद्यस्तु सर्व्वपापैः प्रमुच्यते। अस्नात्वा यः स्पृशेन्मर्त्त्यो लभते स्नानजं फलं। दृष्ट्वा च नश्यते पापं स्पृष्ट्वा लक्ष्मीं प्रपद्यते। अर्च्चयित्वा तु यत्पुण्यं प्रवक्ष्यामि द्विजातयः। अश्वत्थाय तु गोदुग्धं पयो नैवेद्यमेव च। पुष्पधूपादिकं दत्वा नरः स्वर्गान्नहीयते। असुरचाक्षयं वृद्धिर्धनवृद्धिर्यशस्करं। जयदं मानदं तत्र अश्वत्थस्यप्रपूजनं। यज्जप्तञ्च हुतं यच्च स्तोत्रमन्त्रादिकञ्च यत्। सर्व्वं कोटीगुणं तत्र मूले चलदलस्य च। यस्य मूले स्थितो विष्णुर्म्मध्ये तिष्ठति शङ्करः। अग्र-भागे स्थितो ब्रह्मा कथं जगति नार्च्चयेत्। सोमवारेप्यमावस्यां स्नानं यन्मौनिना कृतम्। दानस्य गोसहस्रस्य फलञ्चाश्वत्थ-वन्दने। सप्तप्रदक्षिणेनैव गवामयुतदं फलं। प्रचुरं लक्ष-कोटीश्च तस्माद्धर्म्मार्थं प्रदक्षिणं। यत्किञ्चिद्दीयते तत्र फल-मूलजलादिकं। सर्व्वं तत्राक्षयं विप्रा जन्मजन्मसु जायते। ततो ऽश्वत्थसमो नास्ति वृक्षरूपी हरिर्भुवि। यथा पूज्यो द्विजो लोके यथा गावोऽमरा यथा। तथायं वृक्षरूपी च देवः पूज्यतमः स्मृतः। रोपणे रक्षणे चैव पूजा कर्म्मणि सर्व्वदा। ददाति वित्तं पुत्रांश्च स्वर्गं मोक्षं पुनः क्रमात्। किञ्चिच्छेदन्तु यः

कुर्य्यादश्वत्थस्य तनौ नरः। कल्पैकं निरयं भुक्त्वा चाण्डालादौ प्रजायते॥ नमस्कार मन्त्रस्तु तत्रैव—चलदलाय वृक्षाय सर्व्वदा स्थित विष्णवे। बोधिसत्त्वाय यज्ञाय अश्वत्थाय नमो नमः॥ * ॥ अथ विल्ववृक्षमाहात्म्यं ॥ * ॥ योगिनी-तन्त्रे—विल्वमूलं महेशानि समन्तात् षोड़शं करं। मम जटास्वरूपं हि पर्णं जानीहि सुन्दरि। ऋग्यजुःसाम-सदृशं दलत्रयं वरानने। शाखाश्च सर्व्वशास्त्राणि जानीहि मीनलोचने। कल्पवृक्ष समो विल्वो ब्रह्माविष्णुशिवात्मकः। सर्व्वतीर्थमयो देवि सर्व्वदेवमयः सदा। श्रीवृक्षः परमेशानि अतएव न संशयः। तत्फलैस्तत्प्रसूनैर्व्वा तत्पत्रैर्यः प्रपू-जयेत्। तत्काष्ठचन्दनैर्व्वापि स मे भक्तः स मे प्रियः। विल्वमूले महेशानि प्राणांस्त्यजति यो नरः। रुद्रदेहो भवेत् सत्यं पापकोटीयुतोऽपि सन्। विल्वपत्रस्य माहात्म्यं देवानामपि दुर्लभं। यो दद्याद्विल्वपत्रञ्च शिवायै शम्भवाय च। सदाशिव समो भूत्वा स गच्छेद्ब्रह्ममन्दिरं॥ [illegible]भेद-तन्त्रे—स्वर्णपुष्पसहस्रेण यत्फलं लभते नरः। तस्माल्लक्षगुणं पुण्य अभग्नैकविल्वपत्रके। अभग्नैकविल्वपत्रस्य सहस्रैकेनभागतः। मेरुतुल्यसुवर्णेन तत्फलं न हि लभ्यते॥ प्रणाममन्त्रो यामले·—ओँ नमो विल्वतरवे सदाशङ्कररूपिणे। सकलानि मङ्गलानि कुरुष्वशिवहर्षद॥ स्पर्शनमन्त्रः—ओँ शिवपूजकमालूर शिवप्रिय महातरो। स्पृशामि त्वां महापापसञ्चयात्मां प्रमोचय॥ पत्रचयनमन्त्रः—ओँ पुण्यवृक्षमहाभागमालूर-

श्रीफल प्रभो। महेशपूजनार्थाय तत्पत्राणि चिनोम्यहं॥ विल्वपत्रचयननिषेधकालः—पञ्चान्तद्वादशी सायं सन्ध्याभ्यो भिन्नकालतः। वरमारुह्य चिनुयान्न शाखाभञ्जनं क्वचित्॥*॥ अथ पञ्चवटी॥*॥ पाद्मे—धात्रीवृक्षस्तथा विल्वो वटश्चा-श्वत्थ एव च। रुद्राक्षस्तुलसी वापि पञ्चमः परिकीर्त्तितः। एतेषां रोपणाद्देवि प्रयान्ति ब्रह्मशाश्वतं। सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः॥ ब्राह्मे—सेचनं कुरुते यो वै पञ्चवृक्षस्य नित्यशः। भुक्तेह विपुलान् भोगान् प्रयान्ति मम सादनं। पञ्चवृक्षस्य मूलं वै योनुलिम्पति भक्तितः। कुलकोटी समुद्धृत्य ममदेहे प्रलीयते॥*॥ अथ पितृपूजनं॥*॥ व्यासः—पित्रोरर्च्चा च पत्युश्च समः सर्व्वजनेषु च। मित्राद्रोहो विष्णुभक्तिरेते पञ्च महामखाः॥ धार्म्मे—प्राक् पित्रोरर्च्चया विप्रा यद्धर्म्मं साधयेन्नरः। न तत् क्रतुशतैरेव तीर्थस्नाना-दिभिर्भुवि। पिता स्वर्गः पिता धर्म्मः पिता हि परम-न्तपः। पितरि प्रीतिमापन्ने प्रीयन्ते सर्व्वदेवताः। पितरो यस्य तृप्यन्ते सेवया च गुणेन च। तस्य भागीरथी स्नानमहन्यहनि जायते। सर्व्वतीर्थमयी माता सर्व्वदेवमयः पिता। मातरं पितरं तस्मात् सर्व्वारम्भेन पूजयेत्। मातरं पितरञ्चैव यस्तु कुर्य्यात् प्रदक्षिणं। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा॥ जानुनी च करौ चैव पित्रो प्रणमतः शिरः। निपतन्ति पृथिव्याञ्च सोऽक्षयं लभते फलं। तयोश्चरणतो यावद्रजो गृह्णाति मस्तके। प्रत्यङ्गे च विमुञ्चेत

तावत् पूज्यः सुरालये। तयोः पादारविन्दाच्च रेणुं पिबति यः सुतः। तस्य पापं क्षयं याति जन्मकोटी शतार्ज्जितं। धन्योऽसौ मानवो लोके पूतोऽसौ सर्व्वकल्मषात्। विनायकत्व-माप्नोति जन्मनैकेन मानवः। पितरौ लङ्घयेद्यस्तु वचोभिः पुरुषाधमः। निरये निवसेत्तावद् यावदाहूतसंप्लवं। पित्रो-रनर्च्चनं कृत्वा भुङ्क्ते यस्तु सुताधमः। कृमिपूते च नरके कल्पान्तमवतिष्ठते। रोगिणञ्चापि वृद्धञ्च पितरं वृत्तिकर्षितं। विह्वलं नेत्रकर्णाभ्यां त्यक्त्वा गच्छेच्च रौरवं। अन्त्यजातिषु म्लेच्छेषु चाण्डालेष्वपि जायते। पित्रोरपोषणं कृत्वा सर्व्वपुण्य क्षयो भवेत्। नाराध्य पितरौ पुत्रस्तीर्थसेवां करोत्यपि। न तस्य फलमाप्नोति काटवद् भ्रमते महीं। पित्रोरर्च्चा कृता येन स एव पुरुषोत्तमः। पितुर्म्मातुः परो देवः सुरेषु न च लभ्यते। पित्रोरर्च्चा कृता येन तेन सर्व्वमनुष्ठितं। कृतस्तेन महायज्ञः कृतं तेन महाव्रतं॥ क्रियायोगसारे—पितृवञ्चा मनुष्याणां नरकक्लेशदायिनी। पितृवञ्चा नृपश्रेष्ठ इहामुत्र च दुःखदा। इहसम्पद्विनाशाय परत्र नरकाय च। वरं मन्ये महीपाल ब्रह्महत्यादि पातकं। कदाचिन्निष्कृतिस्तस्मादियं भवति शाश्वती। दुःखार्ज्जितं पुण्यवृक्षं सर्व्वक्लेशविनाशनं। पितृवञ्चा-कुठारेण छिन्दन्ति भुवि मानवाः। यत् किञ्चिद्दीयते भक्त्या पितृवक्त्रे परन्तप। तदश्नाति स्वयं विष्णुः पितृरूपी हरि-र्यतः। प्रत्यक्ष देवौ पितरौ सेवन्ते ये महाजनाः। सर्व्वसिद्धि-र्भवेत्तेषां प्रसादाज्जगतीपतेः। पितृभक्त्या विना यावद्दिनं

तिष्ठति मानवः। तावत् कल्पसहस्रन्तु तिष्ठन्ति नरके नराः॥

॥*॥ अथ पितृस्तोत्रं ॥*॥ ब्रह्मोवाच—नमः पित्रे जन्मदात्रे सर्व्वदेव मयाय च। सुखदाय प्रसन्नाय सुप्रीतये महात्मने। सर्व्वयज्ञस्वरूपाय स्वर्गाय परमेष्ठीने। सर्व्वतीर्थावलोकाय करुणासागराय च। नमः सदाशुतोषाय शिवरूपाय ते नमः। सदापराधक्षमिणे सुखदाय सुखाय च। दुर्लभं मानुषमिदं येन लब्धं मया वपुः। सम्भावनीयं धर्म्मार्थे तस्मै पित्रे नमो नमः। तीर्थस्नान तपो होम जपादि यस्य दर्शनं। महागुरुश्च गुरवे तस्मै पित्रे नमो नमः। यस्य प्रणामस्तवनात् कोटिशः पितृतर्पणं। अश्वमेधशतैस्तुल्यं तस्मै पित्रे नमो नमः। इदं स्तोत्रं पितुः पुण्यं यः पठेत् प्रयतो नरः। प्रत्यहं प्रातरुत्थाय पितृश्राद्ध दिनेऽपि च। स्वजन्मदिवसे साक्षात् पितुरग्रे स्थितोऽपि वा। न तस्य दुर्लभं किञ्चित् सर्व्वज्ञत्वादि वाञ्छितं। नानापकर्म्मकृत्वापि यः स्तौति पितरं सुतः। स ध्रुवं प्रविधायैवं प्रायश्चित्तं सुखी भवेत्। पितुः प्रीतिकरो नित्यं सर्व्वकर्म्माण्यथार्हति॥ इति बृहद्धर्म्मपुराणे व्यासजाबालिसंवादे ब्रह्मकृतं पितृस्तोत्रं समाप्तं ॥*॥ अथ पितृप्रणाममन्त्रः ॥*॥ आचारचिन्तामणौ यमः—स्वर्गापवर्गप्रदमेकमाद्यं ब्रह्मस्वरूपं पितरं नमामि यतो जगत् पश्यति चारुरूपं मुक्तिं तथाप्नोति सदानुसेवनात् ॥*॥

अथ मातृस्तोत्रं ॥*॥ माता धरित्री जननी दयार्द्रहृदया सती। देवी भूववनी श्रेष्ठा निर्द्दोषा सर्व्वदुःखहा॥ आराधनीया परमा दया शान्तिः क्षमा धृतिः। स्वाहा स्वधा च गौरी च

पद्मा च विजया जया। दुःखहन्त्रीतिनामानि मातुरेवैक-विंशतिं। शृणुयात् श्रावयेत् मर्त्त्यः सर्व्वदुःखाद्विमुच्यते। दुःखैर्महद्भिर्व्व्यालोऽपि दृष्ट्वा मातरमीश्वरीं। महानन्दं लभे-न्मर्त्त्यः सा किं वाचोपपद्यते। इति ते कथितं विप्र मातुः स्तोत्रं महागुणं। पराशरमुखात् पूर्व्वमश्रोषं मातृसंस्तुतौ। सेवित्वा पितरौ कश्चिद्व्याधः परमधर्म्मवित्। लेभे सर्व्वज्ञतां तान्तु यात्वसाध्या तपस्विभिः॥ इति वृहद्धर्म्मपुराणे ब्रह्मकृतं मातृस्तोत्रं सम्पूर्णं॥ प्रणाममन्त्र यथा—आचारचिन्तामणौ यमः—या कुक्षिविवरे कृत्वा स्वयं रक्षति सर्व्वदा। नमामी जननीं देवीं परां प्रकृतिरूपिणीं॥ प्रणामक्रमो धौम्यः— मातरं पितरञ्चोभौ दृष्ट्वा पुत्रस्तु धर्म्मवित्। प्रणम्य मातरं पश्चात् प्रणमेत् पितरं गुरुं॥ अत्र—कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः। दैव्यक्याश्च महाबाहुर्वलदेव सहायवान्॥ इति विष्णु-पुराणविरोधात् प्रणम्येत्यत्र प्रणंस्यन्नित्येव पाठ इति कश्चित्। यद्वा प्रणम्य मातरं पश्चात् प्रणमेत् पितरं गुरुमित्यस्य युगपद्दु-भयदर्शनविषयत्वं पूर्व्वार्द्धात् भगवानपि सर्व्वात्मा जगाम पितु-रन्तिकं। छित्वा च लौहनिगड़ं तयोर्म्मोक्षं चकार स। ननाम दण्डवत् भूमौ मातरं पितरं तथा। तुष्टाव भक्त्या देवेशो भक्ति-नम्रात्मकन्धर। इति ब्रह्मवैवर्त्ते जन्मखण्डीय वसुदेव देवकी मोक्षप्रकरणीय वचनाच्च। विष्णुपुराणीयस्य तु प्राङ्मातृदर्शनो-भयदर्शनाभावविषयत्वं परिशेष्यात् तेन यस्य कस्यापि वृद्धस्य प्रागदर्शने तन्नमस्कारस्य ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर

आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते इत्युपक्रम्य अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि संप्रवर्द्धन्ते आयुः प्रज्ञा यशो बलमिति मनुवचनप्रतिपादितस्य न सङ्कोचः॥ पादग्रहणक्रममाह कौर्म्मे—व्यत्यस्त पाणिना कार्य्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणं। उत्तानाभ्याञ्च हस्ताभ्यां पादावस्य मृदु स्पृशेत्। दक्षिणं दक्षिणेनैव सव्यं सव्येन पीड़येत्॥ * ॥ अथ बलिवैश्वदेवनित्यश्राद्धविचारः॥*॥ बलिवैश्वदेवाननन्तरमेव नित्यश्राद्धं कर्त्तव्यं। वैश्वदेवाहुतीरन्वारब्धोक् ब्राह्मणभोजनादिति ब्रह्माण्डपुराणवचने ब्राह्मणभोजनपदेन नित्यश्राद्धप्रतिपादनात् निबन्धृलिखनक्रमाच्च। न च जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतमिति ब्रह्माण्डपुराणीय परार्द्धात् नित्यश्राद्धं भूतयज्ञादेः प्राक् कर्त्तव्यमिति बाध्यं परार्द्धे श्राद्धशब्दस्य पार्व्वणादि श्राद्धपरत्वात्। पार्व्वणश्राद्धादिकरणे तदनन्तरं वैश्वदेवविधिमाह भविष्यपुराणे—कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च। वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप॥ इति शब्दक्रमेण क्रमान्तरं बाध्यते इति तत्त्वकारलिखनाच्च। अतएव पैठीनसीः—पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः। अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते। पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः। आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ इति पैठीनसि वचनान्तरे पितॄणानोपतिष्ठत इत्यनेन वैश्वदेवोत्तरकालस्य नित्यश्राद्धेतर श्राद्धे पर्य्युदस्तत्वं व्यक्तीभूतमिति। वैश्वदेव मकृत्वैव श्राद्धं कुर्य्याद-

नग्निकः । लौकिके तु हुते शेषं पितॄणां नोपतिष्ठते ॥ इति स्मृतिवचनेपि श्राद्धपदं नित्यश्राद्धपरमित्यविरोधः । एव-मन्यान्यपि वचनापि व्याख्येयानि । न च मनुना कुर्य्यादहरहः श्राद्धमित्यनेन नित्यश्राद्धं विधाय वैश्वदेवस्य सिद्धस्य गृह्येग्नौ विधिपूर्व्वकमित्यादिना पश्चाद्वैश्वदेवविधानात् प्रथमं नित्यश्राद्धं पश्चाद्वैश्वदेव इति मदनपारिजातलिखनात् वैपरीत्यमितिवाच्यं मदनपारिजातएव इति केचिदित्यनेन तत्क्रमस्य कटाक्षितत्वात्। सार्व्वत्रिका नियतवचनक्रमरूप प्राथम्येन सर्व्वदेशीयाचारान्यथा-करणे प्रमाणाभावाच्च । व्यक्त भविष्ये—पितॄन् सन्तर्प्य विधिवत् पर्व्वश्राद्धविधानतः । वैश्वदेवं ततः कुर्य्यात् पश्चात् ब्राह्मण-भोजनं । नित्यश्राद्धस्य दिनकरणासम्भवे रात्रावपि कर्त्तव्यता । दिवोदितानि कर्म्माणि प्रमादादकृतानि वै । यामिन्याः प्रहरं यावत्तावत् कर्म्माणि कारयेदिति ॥ वृहन्नारदीयादिति निर्णय-सिन्धुः ॥ * ॥ अथातिथिपूजनं ॥ * ॥ व्यासः—अकृते वैश्वदेवे तु भिक्षुके गृहमागते । उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्ज्जयेत् । वैश्वदेवकृतान् दोषान् शक्तो भिक्षुर्व्यपोहितुं । नहि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति । ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः । वैश्वदेव तद्युगनद्धवाह्नि वलिरपि । एतद-शक्त विषयं शक्तस्य तु पाकान्तरेण द्रव्यान्तरेण वा वैश्वदेवानुष्ठानं कार्य्यं । पञ्चयज्ञांश्च यो मोहान्न करोति गृहाश्रमी । तस्य नायं न च परो लोको भवति धर्म्मतः ॥ इति व्यासवचनात्

पापनाशापेक्षया पापानुत्पादनस्यैव युक्तत्वाच्च न च दोषानुत्पादनदोषनाशयोर्विशेषाभावेऽपि वित्तव्ययायासलाघवेनाननुष्ठानमेव युक्तमितिवाच्यं यत् फलं सोमयागेन प्राप्नोति धनवान् द्विजः। सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयादिति॥ विष्णुपुराणे फलातिशयश्रवणात्। यो भूय आरभते तस्मिन् फले विशेष इति न्यायेनानुष्ठानस्यैव युक्तत्वाच्च। मनुः—निवृत्ते वैश्वदेवे तु यद्यन्योऽतिथिराव्रजेत्। तस्मैचान्नं यथाशक्ति प्रदद्यान्नवलिं हरेत्॥ अन्यशब्दनिर्द्देशादतिथिभोजनपर्य्यन्त वैश्वदेवे कृते यद्यपरोऽतिथिवसेच्छेत्तदा तदर्थं पुनःपाकं कृत्वा तस्मै अन्नं दद्यात्। वलिहरणं ततोऽन्नान्न कुर्य्यात् वलिदाननिषेधात् अन्नसंस्काराभावो वैश्वदेवस्यावगम्यते। अन्नसंस्कारपक्षे कथमसंस्कृतान्नभोजनमनुजानीयादिति कुल्लूकभट्टः। एवञ्चातिथिपूजनस्य नैमित्तिकत्वात् पौर्व्वापर्य्यं नास्ति। विष्णुपुराणं—अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना। तथासनप्रदानेन पादप्रक्षालनेन च। श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च। गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही॥ मनुः—यत्पुण्यफलमाप्नोति गां दत्वा विधिवद्गुरौ। तत्पुण्यफलमाप्नोति भिक्षां दत्वा द्विजो गृही॥ अतिथ्यधिकारे हारीतः—तस्यैव यदाह स्वागतं गृहदेवतास्तेन प्रीणाति यत् पादसेचनं कुरुते पितृंस्तेन प्रीणाति यदन्नं नातिथिं भोजयति प्रजापतिं तेन प्रीणाति यदेनं यान्तमनुयाति श्रेयसो ब्रह्मवर्च्चस्यं तेन सर्व्वान् कामानवाप्नोति॥ विष्णुपुराणे—ततो

गोदोहमात्रन्तु तिष्ठेत् कालं गृहाङ्गणे। अतिथिग्रहणार्थाय तदूर्द्ध्वञ्च यथेच्छया। अचिन्तितमनाहूतं वैश्वदेवेष्ववस्थितं। अतिथिं तं विजानीयान्नैकग्रामनिवासिनं। क्षुधार्त्तस्तृषितश्चैव श्रान्तो गृहमुपागतः। प्रयत्नेन तु सम्पूज्यः सोऽतिथिः स्वर्गसंक्रमः। इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा। सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः। गृह्णीयाद्गोत्रचरणे न स्वाध्याय व्रतानि च। चित्तेन भावयेत्तं वै सर्व्वदेवमयं हरिं। नैकग्रामीणमतिथिं विप्रं साङ्गतिकन्तथा। उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोपि वा॥ याज्ञवल्क्यः— देशं नाम कुलं विद्या मन्नार्थी यो निवेदयेत्। वैवस्वतेषु लोकेषु वान्ताशी स निगद्यते। देशं गोत्रं कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति। न स तत्फलमाप्नोति दाता स्वर्गं न गच्छति॥ विष्णुः—यदित्वतिथिधर्म्मेण क्षत्रियो गृहमागतः। भुक्तवत्सु च विप्रेषु कामं तमपि पूजयेत्। वैश्यशूद्रावपि प्राप्तौ कुटुम्बोऽतिथिधर्म्मिणौ। भोजयेत् सह भृत्यैस्तावा[illegible]स्यं प्रयोजयन्। दिनेऽतिथौ च विमुखे गते यत् पातकम्भवेत्। तदेवाष्टगुणं प्रोक्तं सूर्य्यास्ते विमुखेऽतिथौ। अतिथिः पूजितो येन पूजिताः सर्व्वदेवताः। अतिथिर्यस्य सन्तुष्टस्तस्य तुष्टो हरिः स्वयं। स्नानेन सर्व्वतीर्थानां सर्व्वदानेन यत्फलं। सर्व्वव्रतोपवासाभ्यां सर्व्वयज्ञेषु दीक्षया। सर्व्वैस्तपोभिर्विविधैर्नित्यनैमित्तिकादिभिः। तदेवातिथिसेवायाः कलां नार्हन्ति षोडशीं। अतिथिर्यस्य भग्नाशो याति दृष्टश्च



मन्दिरात्। कोटिजन्मार्ज्जितं पुण्यं तस्य नश्यति निश्चितं। स्त्रीगोघ्नश्च कृतघ्नश्च ब्रह्मघ्नो गुरुतल्पगः। पितृमातृगुरूणाञ्च निन्दको नरघातकः। सन्ध्याहीनो ह्यश्वघाती सत्यघ्नो हरि-निन्दकः। ब्रह्मस्व स्थाप्यहारी च मिथ्यासाक्ष्यप्रदायकः। मित्र-द्रोही कृतघ्नश्च वृषवाहश्च यूपकृत्। शवदाही ग्रामयाजी ब्राह्मणो वृषलीपतिः। शूद्रश्राद्धान्नभोजी च शूद्रश्राद्धान्नभाजनं। कन्या-विक्रयकारी च श्रीहरेर्नामविक्रयी। लाक्षाणां मणिहीराणां तिलानां लवणस्य च। विक्रेता ब्राह्मणश्चैव तुरगानां गवां तथा। एकादशी कृष्णसेवाहीनो विप्रश्च भारत। एते महा-पातकिनस्त्रिषु लोकेषु निन्दिताः। कालसूत्रे च नरके पतन्ति ब्रह्मणः शतं। एतेभ्योप्यधिकः सोपि यस्यातिथिः पराङ्मुखः। बौधायनः—बहून् अशक्नुवन् एकस्मै गुणवते दद्यात् यो वा प्रथममागत इति। मनुः—एकरात्रन्तु निवसन्नतिथि-र्ब्राह्मणः स्मृतः। अनित्यं हि स्थितिर्यस्मात्तस्मादतिथि-रुच्यते ॥ * ॥ अथ ब्राह्मणमाहात्म्यं ॥ * ॥ धार्म्मे—पूजयित्वा द्विजान् देवाः स्वर्गं भुञ्जन्ति चाक्षयं। मनुष्याश्चाप देवत्वं सुखं राज्यमकण्टकं। यस्य विप्राः प्रसीदन्ति तस्य विष्णुः प्रसीदति। तस्माद्ब्राह्मण पूजायां विष्णुस्तुष्यति तत्क्षणात्। श्रद्धया च द्विजं दृष्ट्वा प्रकुर्य्यादभिवादनं। दीर्घायुस्तस्य वाक्येन चिरजीवी भवेन्नरः। अनभिवादनाद्विप्र द्वेषादश्रद्धयापि च। आयुःक्षीणं भवेत् पुंसां भूतिनाशश्च दुर्गतिः। आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याबलस्य च। पूजयित्वा

द्विजश्रेष्ठान् भवेन्नास्त्यत्र संशयः॥ क्रियायोगसारे—ब्राह्मणं प्रणमेद्यस्तु विष्णुभक्त्या नरोत्तमः। आयुः पुत्त्रश्च कीर्त्तिश्च सम्पत्तिस्तस्य वर्द्धते। न च नौति द्विजश्रेष्ठं मूढधीर्मानवो भुवि। सुदर्शनेन तच्छिर्षं हन्तुमिच्छति केशवः॥ मनुः—विद्या तपः समृद्धेषु हुतं विप्र मुखाग्निषु। निस्तारयति दुर्गाच्च महतश्चैव किल्विषात्। शीलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्व्वं सुकृत माधत्ते ब्राह्मणोनर्च्चितो वसन्॥ पराशरसंहितायां—ब्राह्मणस्य मुखं क्षेत्रं निरुपद्रव कार्षिकं। वापयेत् सर्व्वबीजानि सा कृषिः सर्व्वकामिकी। सुक्षेत्रे वापयेद्बीजं सुपुत्त्रे वापयेद्धनं। सुक्षेत्रे च सुपुत्त्रे च प्रक्षिप्तं नैव नश्यति। अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसाधार्य्यमग्निष्टोमफलं हि तत्। व्रताच्छिद्यं तपश्छिद्रं ब्राह्मणैरुपपादितं। ब्राह्मणा जङ्गमं तीर्थं निर्जलं सर्व्वकामदं। तेषां वाक्योदकेनैव शुध्यन्ति मलिनाजलाः। ब्राह्मणा यानि भाषन्ते भाषन्ते तानि देवताः। सर्व्वदेवमया विप्रा न तद्वचनमन्यथा। पद्मपुराणे—न विप्र-पादोदककर्द्दमानि न वेदशास्त्र प्रतिघोषितानि। स्वाहा स्वधा स्वस्ति विवर्ज्जितानि श्मशानतुल्यानि गृहाणि तानि॥ यमः—अग्निरापश्च देवाश्च चन्द्रादित्यानिलास्तथा। सर्व्वदैव हि विप्राणां पादे तिष्ठति दक्षिणे॥*॥ अथ गवाह्निकं॥*॥ पारि-जातधृत ऋष्यशृङ्गः। गवाह्निकञ्च कुर्व्वीत नित्यमेव समाहितः। गवां कण्डूयनं स्पर्शं ग्रासमाह्निकमेव च॥ भविष्ये—तृणोदक-

समायुक्तं यः प्रदद्याद्गवाह्निकं। कपिलाशतदानस्य फलं विन्देन्न संशयः। गवा अह्नि यद्भुज्यते तद्गवाह्निकं। गवाह्निकदाने मन्त्रद्वयं भविष्योक्तं यथा—ओँ पञ्चपूते शिवे पुण्ये पवित्रे सूर्य्यसम्भवे। प्रतीच्छेयं मया दत्तं सौरभेयि नमोऽस्तु ते। सौरभेयि जगन्मात देवानाममृतप्रदे। गृहाण वरदे ग्रासमीप्सितार्थञ्च देहि मे ॥*॥ अथ गोग्रासः ॥*॥ महाभारते—ग्रासमुष्टिं परगवे सार्द्धं दद्याच्च यः सदा। अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति॥ ब्रह्मपुराणे— सौरभेय्यः सर्व्वहिताः पवित्राः पुण्यराशयः। प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः। दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि॥ ततः—ओँ सर्व्वदेवमये देवि देवतैस्त्वं प्रपूजिता। तस्मात् स्पृशामि वन्दामि वन्दिता पापहा भव॥ इत्यनेन स्पृशेत्।—नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः॥ इत्यनेन प्रणम्य— वन्दितासि वशिष्ठेन विश्वामित्रेण धीमता। सुरभे हर मे पापं यन्मया दुष्कृतं कृतं॥ इत्यनेन प्रदक्षिणं कुर्य्यात्। तत्रफलं—गामालभ्य नमस्कृत्य यस्तु कुर्य्यात् प्रदक्षिणं। प्रदक्षिणो कृता तेन सप्तद्वीपा वसुन्धरा॥ स्मृतिः—गवां लवणदानेन रूपवानभिजायते। अन्नदानाच्च सौभाग्यं ग्रास-दानात् श्रियं लभेत्॥ * ॥ अथाभिवादन ॥ * ॥ तत्र मनुः— ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभि-

वाद्याभ्यां पुनस्तान् प्रतिपद्यते॥ अस्यार्थः—हि यस्मात् यूनोल्पवयसो वयोविद्यादिना स्थविरे आयति आगच्छति सति प्राणा ऊर्द्धं उत्क्रामन्ति देहाद्बहि निर्गन्तुमिच्छति। तान् वृद्धस्य प्रत्युत्थानाभिवाद्याभ्यां। पुनः सुस्थान करोति तस्मात् वृद्धस्य प्रत्युत्थायाभिवादनं कुर्य्यादिति कुल्लुकभट्टः॥ ब्रह्मपुराणं—उत्थाय मातापितरौ पूर्व्वमेवाभिवादयेत्। आचार्य्यश्च ततो नित्यमभिवाद्यो विजानता। वृहन्नारदीयेपि—अभिवादनशीलः स्याद्वृद्धेषु च यथाक्रमं। ज्ञानवृद्धा वयोवृद्धा स्तपोवृद्धा इति त्रयः। आध्यात्मिकानि दुःखानि निवारयति यो गुरुः। वेदशास्त्रोपदेशेन तं पूर्व्वमभिवादयेत्॥ मनुः—लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा। आददीत यतोज्ञानं तं पूर्व्वमभिवादयेत्॥*॥ अथाभिवादनप्रयोगः॥*॥ तत्र मनुः—अभिवादात् परं विप्रो ज्यायां समभिवादयन्। असौ नामाहमस्मीति स्वनाम परिकीर्त्तयेत्। अयमर्थः अभिवादये इत्येतस्माच्छब्दात् परं अमुकनामाहमस्मीति स्वनामपरिकीर्त्तयेत्। स्वकीयनामविशेषमुच्चरेदिति कुल्लुकभट्टः। ततश्च भोः शब्दं कीर्त्तयेदन्ते स्वस्वनामोभिवादने इति मनुवचने अभिवादये शुभ शर्म्माहमस्मि भोरिति कुल्लुकप्रयोग साधीयानिति। एवञ्च ततोऽभिवादयेद्विद्वान् असावहमिति ब्रुवन् इति मदनपारिजातधृत याज्ञवल्क्यवचने असावहमिति प्रदर्शनपरं। तर्हि ब्रुवन्नमुकगोत्रोहमिति

काशीखण्डवचनात्। गोत्रोत्सृष्टोऽपि स्यात्। नैवं नाम गोत्रं कुलं गोत्रं गोष्ठञ्च धरणीधर इति कोषात् गोत्रपदस्य नामपरत्वात्। अतएव स्वनामप्रोच्याहमभिवादये इत्यभिवदेदिति कुल्लूकधृत-गौतमसूत्रे प्रोच्येतिक्त्वा प्रत्ययस्य परकालवृत्तिता मुखं व्यादाय स्वपितीतिवत्। मनुः—नामधेयस्य ये केचिदभिवादं न जानते। तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्व्वास्तथैव च॥ नामधेयस्य उच्चारितस्य मतो ये केचिदभिवाद्याः। संस्कृतानभिज्ञतया अभिवादार्थं न जानन्ति तान् प्रत्यभिवादनेऽप्यसमर्थत्वात् प्राज्ञ इत्यभिवाद्य शक्तिविज्ञोऽभिवादयिता अभिवादयेऽहमित्येवं ब्रूयात् स्त्रियः सर्व्वास्तथैव ब्रूयादिति कुल्लुकभट्टः॥ विष्णुः—जन्मप्रभृति यत्किञ्चिच्चेतसा धर्म्ममाचरेत्। सर्व्वं तत् निष्फलं याति एकहस्ताभिवादनात्। अजाकर्णेन विदुषो मूर्खानामेक पाणिना। अजाकर्णेनेति—श्रोत्रसमौ करौकृत्वा पुनः सम्पुटितेन करद्वयेनेत्यर्थः। अथवा अजाकर्णौ सम्पुटितौ यथा तथैव सम्पुटितं करद्वयमपीति पारिजातव्याख्या। सैवं अजाकर्णाकारेण पाणिद्वयेन विदुषोऽभिवादनं कार्य्यं मूर्खनोन्तु पाणिनैकेनेति सोपस्कार योजना॥ धार्म्मे—ब्राह्मणा यत्र तिष्ठन्ति बहवोद्विजसत्तम। प्रत्येकन्तु नमस्कारस्तत्र कार्य्यो न धीमता॥ वृहन्नारदीयेपि—सभायां यज्ञशालायां देवतायतनेष्वपि। प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुरस्कृतं। पुण्यक्षेत्रे पुण्यतीर्थे स्वाध्याय समये तथा।

प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतं॥ काष्णाजिनिः—ब्राह्मणं वै समुद्दिश्य नमस्कारं वदेद् यदि। शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिं॥ गोतमः—ऋत्विक् श्वशुर पितृव्य मातुलानां यवीयसा ज्यायांसः प्रत्युत्थाय चाभिवाद्या इति। ज्यायस्त्वपरिभाषायां। मनुः—न तेन वृद्धोभवति येनास्य पलितं शिरः। यो वै युवाप्यधीयान स्तं देवा स्थविरं विदुः। वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयो यद्यदुत्तरं। ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपं। पितापुत्त्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता। दशाब्दाख्यं पौर सख्यं पञ्चाब्दाख्यं कलाभृतां। त्र्यब्दपूर्व्वं श्रोत्रियाणामल्पेनापि स्व योनिषु। दश अब्दा आख्या यस्य तत् दशाब्दाख्यं पौरसख्यं॥ अयमर्थः—एकपुर-निवासिनां विद्यादिगुणरहितानां एकस्य दशभिर्व्वर्षै ज्येष्ठत्वे सत्यपि सख्यमाख्यायते पुरग्रहणं प्रदर्शनार्थं तेनैकग्रामनिवा-सिनामपिस्यात् गीतादि कलाभिज्ञानां पञ्चवर्ष पर्य्यन्तं सख्यं श्रोत्रियाणां त्र्यब्द पर्य्यन्तं सपिण्डेषु अत्यन्ताल्पे नैव कालेन सह संख्यं अपरिवार्थं सर्व्वत्रोक्त कालादूर्द्ध्वं ज्येष्ठत्वव्यवहारः॥ इति कुल्लुकभट्टः। यमः—अमङ्गलेभ्यः सर्व्वेभ्यो विधवा च ह्यमङ्गला। आशीर्विषायते यस्मात् केवलं मातरं विना। नमामीति वदन् स्त्रीभ्यो नमेत् पादौ न संस्पृशेत्। स्त्रीणाञ्चैव नमस्कारे न गृह्णीयाद्द्विजो बुधः॥ गौतमसंहितायां—

स्त्रीणाममातृपितृव्यभार्य्याणां भगिनीनां भ्रातृभार्य्याणां श्वश्र्वाश्च न पादोपसंग्रहणं। अमातृपितृव्यभार्य्याणामिति। एतेन मातुः पितृव्यपत्नीत्वेऽपि पादग्रहणं कार्य्यमितिसूचितं मातुः पितृव्यपत्नीत्वञ्च। ये जाताप्यनियुक्तायामेकेन बहुभिस्तथा। अरिक्थभाजस्ते सर्व्वे वीजिनामेव ते सुताः। दद्युस्ते वीजिने पिण्डं माता चेत् शुल्कतो हृता इति तत्त्वकारधृतवचनाद्य्ज्ञेयं॥ आपस्तम्बः। उपनीय ददन्वेदमाचार्य्यः स उदाहृतः। एकदेशस्त्वोपाध्याय ऋत्विग्यज्ञकृदुच्यते। एते मान्या यथापूर्व्वमेभ्यो माता गरीयसी। मनुः। उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता। सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते। उपाध्यायानपेक्ष्य दशगुणेन आचार्य्यः आचार्य्याणां शतमपेक्ष्य पिता पितॄनपेक्ष्य सहस्रं माता गौरवेणातिरिक्ता भवति। अत्रोपनयनपूर्व्वक-सावित्री मात्राध्यापयिता आचार्य्यो नाभिप्रेतः। किन्तु ऋत्विक्। तमपेक्ष्य पितुरुत्कर्षः। उत्पादकब्रह्मदात्रोरित्यनेन मुख्याचार्य्यस्य तस्य पितरमपेक्ष्य उत्कर्षं वक्ष्यतीत्यविरोधः। इति कुल्लुकभट्टः। उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता। ब्रह्मजन्म हि विप्रस्य प्रेत्यचेह च शाश्वतं। जनकाचार्य्यौ द्वावपि पितरौ जन्मदातृत्वात्। तयोराचार्य्यपिता गुरुतरः। यस्माद्विप्रस्य ब्रह्मग्रहणार्थं जन्म उपनयन-जन्य-संस्काररूपं परलोके इहलोके च शाश्वतं नित्यं ब्रह्मप्राप्तिफलकत्वादिति कुल्लुकभट्टः। वशिष्ठः। ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयं। वैश्यं

चेमं समागम्य शूद्रमारोग्यमेव च ॥ * ॥ अथ प्रत्यभिवादनं। मदनपारिजाते आपस्तम्बः। सदक्षिणं बाहुं श्रोत्रसमं प्रसार्य्य ब्राह्मणे प्रत्यभिवादयेत्। उरःसमं राजन्ये मध्यसमं वैश्ये नीचैः शूद्रे प्राञ्जलिरिति। अस्यार्थः। अभिवाद्यमाचार्य्यपुरोहितमभिवादकं सदक्षिणं यथास्यात्तथा बाहुद्वयं श्रोत्रसमं प्रसार्य्य प्राञ्जलिः प्रत्यभिवादयेत्। अर्थादञ्जलेः शिरःसंयोग इति ध्वनितं। एवमुरःसमेन कण्ठेऽञ्जलिसंयोग इति मध्यसमेन नाभावञ्जलियोग इति एतत् सर्व्वं न्यायाचारसम्वादादवधेयमिति। यमः। अभिवादे तु यो विप्र आशिषं न प्रयच्छति। श्मशाने जायते वृक्षः काकगृध्रादिशोभितः। कृताभिवादनं विप्रं यो न प्रत्यभिवादयेत्। स नास्त्यन्यमसौ ज्ञेयो नाभिवाद्यः कदाचन। मनुः। यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनं। नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः। प्रणमन्तं समुत्थाय विप्रः प्रत्यभिवादयेत्। पुत्र शिष्यौ विना भ्रातॄन् भागिनेयं सुतापतिं। आयुष्मान् भव सौम्येति वाच्यो विप्राभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्योः पूर्व्वाक्षरः प्लुतः। आयुष्मान् भव सौम्येति वाच्यस्तस्यान्ते अभिवादकस्य नामवाच्यं विष्णुशर्म्मन्निति तस्य चान्ते अकारो वाच्यः तस्य चाकारस्य पूर्व्वाक्षरः प्लुतः। यद्यपि पूर्व्वाक्षरः नकारस्तथापि अस्य व्यञ्जनत्वेन प्लुतत्वायोगात् शर्म्मन् इत्यत्रयोऽयमकारः सएव पूर्व्वपदाभिधेय इति तस्यैव प्लुतता। अथवा अस्याभिवादकस्य नाम्नोऽन्ते योऽयमकारः



अकार इति स्वरमात्रोपलक्षणं। सर्व्वेषां नाम्नामकारस्तत्त्व-नियमाभावात् स एवान्तस्वरः पूर्व्वाणि नामगतानि अक्ष-राणि यस्य स तथोक्तः एवंविधः प्लुतोवाच्यः। न पुनरन्य एवाकारो नामान्ते वाच्यः। यथावशिष्ठव्याकरणं। आम-न्त्रिते स्वरान्तोस्य प्लवते। आमन्त्रिते कर्त्तव्ये अभिवादक-नाम्नोन्ते यः स्वरः स प्लवते त्रिमात्रो भवतीत्यर्थः। ततश्च प्रत्यभिवादने एवं प्रयोगो भवति आयुष्मान् भव सौम्य विष्णु-शर्म्मइ न् अ इति अथवा आयुष्मान् भव सौम्य विष्णुशर्म्मइँन् इति मदनपारिजातः। मन्वर्थ मुक्तावल्यान्तु अभिवादने कृते प्रत्यभिवादयित्रा अभिवादको विप्रादिः आयुष्मान् भव सौम्येति वाच्य तस्यान्ते अभिवादकस्य नामवाच्यं। तस्य चाभिवाद-कस्य यन्नाम तस्यान्ते योऽकारादिः स्वरो नाम्नामकारान्तत्व-नियमाभावात्। सप्लुतः कार्य्यः। स्वरापेक्षञ्चेदमकारान्तत्वं व्यञ्जनान्तेपि नाम्नि सम्भवति। पूर्व्वं नाम गतमक्षरं संश्लिष्टं यस्य स पूर्व्वाक्षरः तेन नामन्तु वपक्षश्च चाकारादिः स्वरः प्लुतः कार्य्यः। एतच्च वाक्यस्यटेः प्लुत उदात्त इत्यस्यानुवृत्तौ प्रत्य-भिवादेऽशूद्र इति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्। व्याख्यातञ्च वृत्तिः कृता वामनेन। टेरिति किं व्यञ्जनान्तस्यैव-टेः प्लुतो यथास्यादिति तस्मादीदृशं प्रत्यभिवादनवाक्यं। आयुष्मान् भव सौम्य शुभ शर्म्मइुँन् एवं क्षत्रियस्य बलवर्म्मइुँन् वश्यस्य वसु भूतेइुँ राजन्य विशां वेति कात्यायनवचनात् क्षत्रियवैश्ययोः पक्षे प्लुतो न भवति शूद्रस्य प्लुतो न कार्य्यः।

अशूद्र इति पाणिनिवचनात् । स्त्रियामपि निषेधः इति कात्यायनवचनात् । स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः गोविन्द राजस्तु ब्राह्मण नाम्नि शर्म्मोपपदं नित्यं प्रागभिधाय प्रत्यभिवादनवाक्ये आयुष्मान् भव सौम्य भद्र इति निरुपपदोदाहरणं सोपपदोदाहरणा नभिज्ञत्वमेव निजं ज्ञापयति । धरणीधरोपि आयुष्मान् भव सौम्येति सम्बुद्धि विभक्त्यन्तं मनुवचनं पश्यन्नपि असम्बुद्धि प्रथमैकवचनान्तममुकशर्म्मा इत्युदाहरन् विचक्षणैरुपेक्षणीय एव इति कुल्लूकभट्टः । नन्वसम्बुद्धिप्रथमान्तस्यायुष्मान्नित्येतस्यापि मनुवचने दृष्टत्वात् धरणीधरदत्तोदाहरणमेव साधीय इति चेन्न विकृतिरूपस्यायुष्मान्नित्येतस्य विशेषणत्वेन गौणत्वात् । अपि च अव्यक्तं प्रधानगामीति जैमिनिसूत्रेण प्रकृत्यात्मक सौम्येति पदसमानाधिकरणतैवाभिवादकनाम्नः स्वीक्रियते अन्यथायुष्मान्नित्येतत् समानाधिकरणत्वेन तत्सभापवृत्तिप्रयोगात्वे अभिवादकनाम्नो वाक्यस्य टेरभावात् कथं प्लुतत्वात्मर इति तर्हि सम्बुद्धिविभक्त्यन्तं मनुवचनमिति कुल्लूकपाठो न सङ्गच्छते इति सत्यं सम्बुद्धिविभक्त्यन्तं प्रत्यभिवादनवाक्यं । मनुवचनं मनुवचनस्थमिति योजना । यत्तु आत्मनाम गुरोर्नाम यन्नाम कृपणस्य च । आयुष्कामो न गृह्णीयात् ज्येष्ठपुत्रकलत्रयोरिति वचनं तदभिवादनप्रत्यभिवादनव्यतिरिक्तविषयं । प्रत्यभिवादने दीक्षितस्यापि नाम न ग्राह्यं । यथा मनुः । अवाच्यो दीक्षितो नाम्नो यवीयानपि यो भवेत् । भोभवत् पूर्व्वकन्त्वेन

मभिभाषेत धर्म्मवित्। एतेन भो दीक्षित भवन् दीक्षित इत्यादि प्रयोगः। अथैवमभिवादकनामाज्ञाने दीक्षितत्वादि विशेषाज्ञाने च प्रत्यभिवादनासम्भवात् का गतिरभिवाद्यस्येति चेति स्वस्तीति ब्राह्मणे ब्रूयादायुष्मानिति राजनि। वर्द्धतामिति वैश्येषु शूद्रेष्वारोग्यमेव चेति कल्पतरुधृतयमवचनं मनुवचनाविरोधात् प्रत्यभिवादनाभावविषयमिति। भट्टाचार्य्यैरेव मलमासतत्त्वे व्यवस्थापितत्वात् नास्माकं पर्य्यनुयोग इति। अत्र च प्रत्यभिवादनविधायकमनुवचनविरोधशब्दमात्रोपन्यासकृता तत्त्वकारेणापि तत्त्वावशिष्ट ग्रन्थकरणापेक्षा सुतरामेव कृतेति सफलमस्माकं प्रयतनमिति प्रसङ्गादुक्तं। किन्त्वात्र व्यवस्थायां वासना चेयं। आयुष्मान् भव सौम्यामुक इति प्रत्यभिवादनविधौ आयुष्मानिति क्षत्रियमात्रविषयमुपलक्षणं। ननु सर्व्ववर्णविषयविधौ निविष्टमिति आयुष्मानित्यस्य शास्त्रान्तरलभ्यत्वेन तदंशे विधेयत्वासम्भवात्। विधेयन्तु अदग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयत इति भट्टनयेन च केवलं। प्रथमान्तपदमनूद्य भव सौम्यामुक इति तर्हि भव सौम्यामुक इत्येतावन्मात्रं कथं नोक्तमिति चेत् यमवचने स्वस्तीति स्वस्तिमान इत्यर्थज्ञापनार्थम् एवं वर्द्धतामिति वृद्धिमानित्ये तावत् परत्वार्थं क्रमज्ञापनार्थञ्च उपलक्षणमात्रं क्षत्रप्रत्यभिवादविषयमायुष्मानिति पदं अन्यथा नानाविधिकल्पनगौरवात्। वचनयोरेकवाक्यतासम्भवे भिन्नवाक्यताया अन्याय्यत्वाच्च कथमन्यथा

रात्रौ श्राद्धं न कुर्व्वीत इत्यादीनां पर्य्युदासकल्पनया अमावास्यायां पितृभ्यो दद्यादित्यादिभिरेकवाक्यता सम्भव: इति । अभिवादये अमुक शर्म्माऽहमस्मि भोरित्यभिवादनविधिनिरूपणेन नामान्तरानामसम्भवात् दीक्षितत्वादिविशेषग्रहस्यापि तत्रत्यत्वेन व्यक्तीभूतत्वाञ्च प्रत्यभिवादनाभावस्यानिष्ठ्वादितत्वं । तस्मादियमेव व्यवस्था सर्व्वेषामाश्र हृदयङ्गमेति ।

यत्तु कुल्लूकभट्टेन आयुष्मान् भव सौम्य शुभ शर्म्मन्नित्यादि लिखितं तदपि प्लुतांशविवेचनसंवादाय । पाणिनिवृत्तिकार वा मतदत्तोदाहरणप्रदर्शनमात्रपरं न तु प्रत्यभिवादनव्यवस्थानिरूपणपरं तथात्वे स्त्रीशूद्रप्रतिषेधेन सर्व्वस्मृतिप्रबलमनुवचनसङ्कोचे महाननर्थ: स्यात् मदनपारिजातेऽपि प्लुतेतरविवेचनाविरहाद्धर्म्मन्यत्र शर्म्मेति क्रमेण भ्रान्तयन्ति केवलं लेखका: ॥ * ॥ अथाभिवादनपर्य्युदास: ॥ धर्म्मो कनिष्ठं नाभिवन्देत पितृव्यं मातुलन्तथा ॥ उत्थाय चासनं दद्यात् कृताञ्जल्यग्रत: स्थित: ॥ गौतमसंहितायां । ऋत्विक् श्वशुरपितृव्यमातुलानां यवीयसां प्रत्युत्थान मनाभवाद्या: । विष्णुसंहितायां । श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनं । वृहन्नारदीये । नाभिवाद्यास्तु विप्रेण क्षत्रियाद्या: कदाचन । नास्तिकं भिन्नमर्य्यादं कृतघ्नं ग्रामयाजकं । स्तेनञ्च कितवञ्चैव कदाचिन्नाभिवादयेत् । पाषण्डं पतितं षण्ढं तथा नक्षत्रजीविनं । महापातकिनञ्चैव कदाचिन्नाभिवादयेत् । उन्मत्तञ्च शठं धूर्त्तं धावन्तमशुचि-

न्तथा। विवादशीलं व्रात्यञ्च रमन्तं जलमध्यगं। भिक्षान्न-धारिणञ्चैव शयानं नाभिवादयेत्। भर्तृघ्नीं पुष्पिणीं जारां सूतिकां गर्भपातिनीं। व्रतघ्नीञ्चाथ चण्डालं कदाचिन्नाभि-वादयेत्। तैलाभ्यङ्गं गतोच्छिष्टं रोगिणञ्चार्द्रवाससं। पारा-वारगतोद्विग्नं वहन्तं नाभिवादयेत्। यज्ञस्यान्तर्गतं नष्टं क्रीड़न्तं स्त्रीजनैः सह। बालक्रीड़गतं वापि पुष्पयुक्तं कुशा-न्वितं। शिरः प्रावितकण्ठं वा चाप्सु मुक्तशिखन्तथा। मलिनीं नाभिवन्देत गुरुपत्नीं कथञ्चन। नस्पृशेत्ताञ्च मेधावीं स्पृष्ट्वा स्नानेन शुद्ध्यति। यमः। जपयज्ञस्थलस्थञ्च समित्-पुष्पकुशानलं। उदपात्रञ्च भैक्ष्यञ्च वहन्तं नाभिवादयेत्। शातातपः। पाषण्डं पतितं व्रात्यं महापातकिनं शठं। मापालतुकं कृतघ्नञ्च नाभिवादेत् कदाचन। वमन्तं जृम्भमाणञ्च कुर्व्वन्तं दन्तधावनं। अभ्यक्तशिरसञ्चैव सरुजं नाभिवादयेत्॥ * ॥ अथ भोजनं॥ * ॥ विष्णुपुराणे॥ स्नात्वा यथावत् कृत्वा च देवर्षि-पितृ-तर्पणं। प्रशस्त-रत्नपाणिस्तु भुञ्जीत प्रयतो गृही। कृतजापोहुते चाग्नौ शुद्धवस्त्रधरो नृप। दत्वातिथिभ्यो विप्रेभ्यो गुरुभ्यः संश्रिताय च। पुण्यगन्धधरः शस्तमाल्यधारी नरेश्वर। नैकवस्त्रधरो आर्द्रपाणिपादो नराधिप। विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः। देवलः। स्नात्वा प्रक्षाल्य पादौ च अगन्धालङ्कृतः शुचिः। पञ्चयज्ञावशिष्टञ्च यो भुङ्क्ते सोऽमृताशनः। भविष्ये। अकृत्वा वैश्वदेवन्तु ये भुञ्जन्त्यबुधा जनाः। तथा विना तु

शास्त्रेण मृगयोनिं व्रजन्ति ते। विनाशास्त्रेणेति भोजन-विधायकशास्त्रातिक्रमेणेत्यर्थः। व्यासः। उपलिप्ते समे स्थाने शुचिः पीठमवस्थितः। प्राङ्मुखोऽन्नानि भुञ्जीत यथा कामेन वा पुनः। धार्म्मे च। देवानामेकभुक्तन्तु द्विर्भुक्तं मानवस्य च। त्रिभुक्तं प्रेत दैत्यानां चातुर्थं कौणपस्य च। निरामिषं हवि-र्देवा मत्स्यमांसादि मानुषाः। पूति पर्य्युषितं युष्टं मन्ये भुञ्जन्त्यभीक्ष्णशः। आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणा-मुखः। श्रियः प्रत्यङ्मुखो भुङ्क्ते ऋतिं भुङ्क्ते त्युदङ्मुख इति मनुवचनकाम्यपरं। प्राच्यानने भवेदग्निर्याम्ये प्रेतत्वमिष्यते। वारुणे च भवेद्रोगो आयुर्व्वित्तन्तथोत्तर इति व्यासवचन-विरोधात् ब्रह्मचारि प्रकरणे कुल्लुकभट्टस्य काम्यभोजनपर-लिखनाच्च। मनुः। उपस्पृश्य द्विजो नित्यमन्नमद्यात् समा-हितः। भोजयित्वा तु सख्यादीन् सम्प्रीत्या गृहमागतान्। आपस्तम्बः। सुवासिनीं कुमारांश्च रोगिणो गर्भिणीस्तथा। अतिथिभ्योऽत्र एवैतान् भोजयेदविचारयन्। अदत्वा तु य एतेभ्यः पूर्व्वं भुङ्क्ते विचक्षणः। स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः। देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः। पूजयित्वा ततः पश्चादेष धर्म्मः सनातनः। प्रचेताः गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलं। लौहवद्धं सदैवार्कं वर्जयेदासनं बुधः। विष्णुपुराणे। विशुद्धमनसा प्रीतो भुञ्जीत न विदिङ्मुखः। अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः। काशीखण्डे। यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्म्मिणः।

हरन्ति रसमन्नस्य मण्डलेन विवर्जितं। ब्रह्माद्याश्च सुराः सर्व्वे वशिष्ठाद्या महर्षयः। मण्डलञ्चोपजीवन्ति ततः कुर्व्वीत मण्डलं। विष्णुपुराणवृहन्नारदीययोः। संस्थाप्य चासने पादौ वस्त्रार्द्धं परिधाय वा। मुखेमध्यापितं भुक्त्वा सुरापीत्युच्यते बुधैः। आचारचिन्तामणौ यमः। बहूनां भुञ्जतां मध्ये न चाश्नीयात् त्वरान्वितः। वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद्व्रजेत्। एकवस्त्रो न भुञ्जीत करादमपिधाय च। मार्कण्डेयः। न्यस्तपात्रन्तु भुञ्जीत पञ्च ग्रासान् महामुने। पश्चादुद्धृतपात्रेपि भोजने नास्ति दूषणं एतत्त अस्पृश्य स्पर्शन-शङ्काविषयं। ब्रह्मपुराणे। पैत्रे कर्म्मणि भुञ्जानो भूमौ पात्रं न चालयेत्। वशिष्ठः। सर्व्वाङ्गुलीभिः प्राश्नीयात् पाणिञ्च नावधुनयेत्। वेदव्यासीये। हैमराजतकांस्येषु पात्रेष्व-द्यात् सदा गृही। तदभावे माधुगन्ध मोध्रु द्रुमलतासु च। मदनपारिजाततधृतवृद्धमनुः। ताम्रपात्रे न भुञ्जीत भिन्न-कांस्ये मलाविले। पालाशपद्मपत्रेषु गृही भुक्त्वन्दवञ्च-रेत्। आदित्यपुराणे। एकएव तु यो भुङ्क्ते विशाले कांस्यभाजने। चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलं। आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्। मुखेन चान्नमश्नाति तुल्यगोमांसभक्षणे। मुखेन गवादिवदित्यर्थः। इति पारिजातः। वृहन्नारदीये। आपोशाने चाचमने-पेये चोष्येऽपि च द्विजः। शब्दं न कारयेद्विप्रः कुर्य्याच्चे-न्नारकी भवेत्। हारीतः। पात्रेष्वयथानुरूपेषु पुत्रभृत्या-

नुजैः सह। भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नन्तु भक्षयेत्। पवित्रपाणिः पुण्यञ्च लभतेत्वघमर्षणं। पुलस्त्यः। भोजनन्तु न निःशेषं कुर्य्यात् प्राज्ञः कथञ्चन। अन्यत्र दधिमध्वाज्य-पयस्मोदकच्चीरतः। विष्णुः। न दिवा धानाः न रात्रौ तिल-संयुक्तं द्रव्यं। न दधिसक्तून् अश्नीयात् न चन्द्रार्कतारा निरीक्षेत न मूर्द्धानं स्पृशेत्। न प्रत्यञ्च्खोऽश्नीयात् न निःशेष-कृत् स्यात्। अन्यत्र दधिमधुसर्पिःपयःसक्तुपललोदकेभ्यः। नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे न तथास्थितः। बहूनां प्रेक्ष-माणानां नैकस्मिन् बहवस्तथा। शून्यागारे चाग्निगृहे देवायतने न च। पिबेन्नाञ्जलिना तोयं नाति सौहित्य-माचरेत्। नातिसौहित्यं नातिद्यम्पिः। वशिष्ठः। हस्त-दत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषं। तस्माद्दन्तरितं देयं पर्णेनैव तृणेन वा। प्रदद्यान्नतु हस्तेन नायसेन कदाचन। ब्रह्म-पुराणं। एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्। घृतं तैलञ्च लवणं पानीयं पायसन्तथा। भविष्यपुराणे। आय-सेन तु पात्रेण यदन्नमुपनीयते। भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्। वेदव्यासीये। अभ्युक्षयान्नं नमस्कारै-र्भुवि दद्याद्बलित्रयं। भूपतये भुवः पतये भूतानां पतये तथा। अपः प्राश्य ततः पश्चात् पञ्च प्राणाहुतीः क्रमात्। स्वाहा-कारेण जुहुयाच्छेषमद्यात् यथा सुखं। उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत्। अत्र नमस्कारैरिति श्रवणात् बलि-

द्वयमिति श्रवणाच्च भूपतये नम इत्यादि प्रयोगः कार्य्यः। एवञ्च प्रदद्याद्भुवः पतये भुवन पतये तथा। भूतानां पतये स्वाहेत्युक्ता भूमौ बलित्रयमिति महाभारतवचनात् भुवः पतये स्वाहेत्यादि प्रयोगानामपि शास्त्रार्थत्वेन तुल्यबलत्वादिच्छा विकल्पः। ब्रह्मपुराणं। अन्नं विष्णुः स्वयं प्राह नित्ययैव जनार्द्दनः। यो मां ददाति प्राणाय भुञ्जानः शास्त्रविद् द्विजः। प्राणार्थं मां सदा ध्यायेत् स मां पूजयते सदा। वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितं। ओंओमीति जपन्नन्नं प्रणमेदस्तत्त्व तत्। मनुः। पूजयेदशनं नित्यं बलनूर्ज्जञ्च यच्छति अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदं। बौधायनः। प्रक्षालितपाणिपाद अप आचम्य शुचौ सम्भूते देशेऽन्नमुपसंगृह्य कामक्रोधलोभमोहानपहृत्य सर्व्वाभिरङ्गुलीभिः शब्दमकुर्व्वन् प्राश्नीयात् महाव्याहृतिभिः प्रदक्षिण माचमुदकं परिषिच्याप सव्येन पाणिना हविर्भुञ्जन् अमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति। हविर्भुञ्जन्निति भविष्यत्समीप्यवर्त्तमानकालत्वात् भोक्ष्यन्नित्यर्थः। हारीतः। ओंओमीति अन्नाज्यं ह्रयमानमभिमन्त्रयेत्। द्यौस्त्वा ददातु दीयमानं भूस्त्वा प्रतिगृह्णातु। भविष्यपुराणे। उपप्राणेभ्यः पञ्चभ्यो नागादिभ्यो बलिन्ततः। निरामिषेण चान्नेन भूमौ दद्याद्यथाक्रमं। नागाय पूर्व्वतो दद्यात् कूर्म्मं दक्षिणतो न्यसेत्। कृकरञ्चोत्तरे न्यस्य देवदत्तन्तु पश्चिमे। मध्ये धनञ्जयं विद्यादित्येते वायुदेवताः।

नागः कूर्म्मः कृकरश्च देवदत्तो धनञ्जयः। उपप्राणा इमे पञ्च तेषां भूमौ प्रदीयते। प्राणेभ्य स्त्वथ पञ्चभ्यः स्वाहा प्रणव-संयुताः। पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च। अमृतोपस्तरणमसीति आपो शानात्परं प्राणादिहोमः। प्रागुक्त बौधायनात् वक्ष्यमाणगोभिलाच्च। विष्णुपुराणं। पञ्चग्रासान् महामौनं प्राणाद्याप्यायनाय तत्। प्राणापानसमानानामुदान-व्यानयोस्तथा। महामौनं [illegible]। गोभिलः। व्याहृतिभि र्गायत्र्या वाभिमन्त्र्य ऋतञ्च सत्येन परिषिञ्चा-मीति सायं सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः। अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः। त्वं यज्ञस्त्वं वषट्कारस्त्वं ब्रह्मा त्वं प्रजापतिः। आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्। अमृतोपस्तरणमसीत्यपः पीत्वा पञ्चग्रासान् गृह्णी-यात्। ओं प्राणाय स्वाहेति गार्हपत्यमेव जुहोति ओं अपानाय स्वाहेत्यन्वाहार्य्यमेव दक्षिणाग्निं तेन जुहोति ओं व्यानाय स्वाहेत्याहवनीयमेव तेन जुहोति ओं उदानाय स्वाहेति सभ्यमेव तेन जुहोति ओं समानाय स्वाहेत्यावसथ्य-मेव तेन जुहोति अमृतोपस्तरणमसीत्यतः विष्णोरन्नमयस्य चेति शेषः पूरणीयः। आपोशानञ्च गृह्णीयात् सर्व्वतीर्थ-मयञ्च यत्। अमृतोपस्तरणमसि विष्णोरन्नमयस्य चेति ब्रह्म-पुराणात्। अत्र चास्तरणार्थन्तु प्राश्यते यो मृतं सकृत्। अमृतोपस्तरणमसि स्वाहेति सच उच्चरेदिति मध्यापद्धती लिखितवचनं प्रमाणयन्तोऽमीत्येतदनन्तरं स्वाहाकारं कुर्व्व-

न्तीति तत्त्वकारः। मदनपारिजाते शौनकः। स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवाः। जिह्वया च ग्रसेदन्नं दशनैन न संस्पृशेत्। तर्जनी मध्यमाङ्गुष्ठलग्नं प्राणाहुतौ भवेत्। मध्यमानामिकाङ्गुष्ठैरपाने जुहुयाद्बुधः। कनिष्ठानामिकाङ्गुष्ठैर्व्यानेतु जुहुयाद्धविः। तर्जनीन्तु वहिः कृत्वा उदाने जुहुयाद्बुधः। समाने सर्व्वहस्तेन समुदायाहुतिर्भवेत्। प्राणाद्याहुतिपरिमाणमाह व्यासः। आर्द्रामलकमानेन कुर्य्याद्धोम वलिं वहिः। प्राणाहुति वलिञ्चैव सूदं गात्रविशोधनीं। एतत् पञ्चग्रासशेषभोजननिषेध आचारादर्शः। ग्रासशेषं नचाश्नीयात् पीतशेषं पिवेन्न तु। शाकमूलफलेक्षूणि दन्तच्छेदैर्न भक्षयेत्। उपवासदिनेपि प्राणाहुतिमन्त्रजपमाह वौधायनः। प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धभोजने जपेत्। विष्णुपुराणं। क्वचित् क्षीरान्तमाहारं नच पश्चात् पिवेद्दधि। मनुः। न भुञ्जीतोद्धृत स्नेहं नातिसौहित्यमाचरेत्। नाति प्रगे नाति सायं। न सायं प्रातराशितः। अनारोग्यमनायुष्यमस्वर्गञ्चातिभोजनं। अपुण्यं लोकविद्विष्टं तस्मात्तं परिवर्जयेत्। विष्णुधर्म्मोत्तरे। अतिभोजनतो राम तथा चाभोजनेन च। रोगा हि सर्व्वे जायन्ते योगादेव न धारणं। व्रतादियोगादन्यत्र न धारणमभोजनस्येति शेषः। तत्रैव पिवतो यत् पतेत्तोयं भाजने मुखनिःसृतं। अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत्। ब्राह्मणादावदेयद्रव्यभक्षणनिषेधस्तत्रैव। यन्न दद्यान्न चाश्नी-

यात् कदाचिदपि तत् स्वयं। न पिबेन्न तथाश्नीयात् कृत्वा पर्य्यन्तिकान्नरः। अपर्य्यन्तिकान् अपारलौकिकान् कृत्वेत्यर्थः। कौर्म्मे। अमृतापिधानमसीत्युपविष्टाऽपः पिबेत्। हस्ते प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः। स देवांश्च पितॄंश्चैव आत्मानञ्चैव घातयेत्। अर्द्धं पीत्वा तु गण्डूषमर्द्धं त्याज्यं महीतले। रसातलगतानागांस्तेन प्रीणाति नित्यशः। अपूते नरके घोरे रौरवे प्रेतवासिनि। ये काङ्क्षन्ति मदोच्छिष्टं तेभ्यो भूमौ प्रदीयते। भोजनान्ते तदुच्छिष्टं मन्त्रेणानेन नित्यशः। उच्छिष्टभागधेयेभ्यः सोदकं निर्व्वपेद्भुवि। देवलः। आचम्य च ततः कार्य्यं दन्तकाष्ठस्य भक्षणं। भोजने दन्तलग्नानि निकृत्याचमनञ्चरेत्। विष्णुधर्म्मोत्तरे। आचान्तोऽप्यशुचिस्तावद्यावत् पात्रमनुद्धृतं। उद्धृतेऽप्यशुचिस्तावद्यावन्नो मृज्यते मही। भोजनशालायां मुखप्रक्षालने दोष माहात्रिः। यस्तु भोजनशालायामानमस्य उपस्पृशेत्। तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत्। यत्तु भुक्त्वामनस्योऽप्याचामेन्नान्यकाले कदाचनेति रत्नाकरधृतवचनं तद्भोजन शालेतरविषयमिति। आसनस्थ आसनारूढपादतल इत्यर्थः। देवलः। आचान्ते हृदयदेशमभिमृषति प्राणानां ग्रन्थिरसि रुद्रोमा विषभुक्। तेनान्नेनाप्यायस्वेति। विष्णुपुराणं। भुक्त्वा सम्यगाचम्य प्राङ्मुखोदङ्मुखोऽपिवा। यथावत् पुनराचामेत् पाणी प्रक्षाल्य मूलतः। स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः। अभीष्टदेवतानाञ्च कुर्व्वीत स्मरणन्ततः। ओं

अग्निवाप्यायतां धातून् पार्थिवान् पवनेरितः। दत्तावकाशो नभसा जरयत्वस्तु मे सुखं। अन्नं बलाय मे भूमे रपामग्न्य-निलस्य च। भवत्वेतत् परिणतौ ममास्त्वव्याहतं सुखं। प्राणापानसमानानामुदानव्यानयोस्तथा। अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखं। अगस्तिरग्निर्वड़वानलश्च, भुक्तं मयान्नं जरयत्वशेषं। सुखञ्च मे तत् परिणामसम्भवं, यच्छत्वरोगं मम चास्तु देहे। विष्णुः समस्तेन्द्रियदेहदेही, प्रधानभूतो भगवान् यथैकः। सत्येन तेनात्रमशेषमेतत्, दारोग्यदं मे परिणाममेतु। वाय्यैवत्ता तथैवान्नं परिणाममवेतिह। तेन सत्येन मद्भुक्तं जीर्य्यत्वन्नमिदं तथा। इत्युच्चार्य्य स्वहस्तेन परिमृज्य तथो-दरं। अनायासप्रदायी स्यात् कुर्य्यात् कर्म्माण्यनन्तरः। कौर्म्मे। पुनराचम्य तत् पश्चात् पादाङ्गुष्ठे च दक्षिणे। निःसारयेद्धस्तजलमूर्द्धहस्तो समाहितः। अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठञ्च समाश्रितः। ईशः सर्व्वस्य जगतः प्रभुः प्रीणातु विश्व-भुक्। ततः करादिकसंस्पृशन् जानुनी स्पृशेत्। मा करेण करं प्रोक्षन् मा जङ्घे मा च चक्षुषी। ऊरू संस्पृश कौन्तेय भर्त्तव्यस्ते महाजन इति पारिजातधृतदेवलवचनात्। जानुनी स्पृश राजेन्द्र भर्त्तव्या बहवो यदीति विष्णुधर्म्मोत्तराच्च। वृद्ध-शातातपः। दधिक्षीरघृतैर्भुक्ता प्रभूतैर्व्यञ्जनैस्तथा। उष्णो-दकैर्द्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत्। आचारादर्शे। लवल्यामलकी जम्बु इक्षुपीवरदाड़िमाः। कुसुमं कन्दपक्का-ख्यान्यनाचम्यानि वै नृणां। जाम्बवं करमर्द्दञ्च फलं हैनारनस्य

च। लकुचं तरुसंवल्य मद्यादाचमनं विना। कषायकटु तिक्तानामनाचम्यैव भक्षणं। चर्व्वयेत्तिलताम्बूलमित्यमाचमन विना। तिलपक्वं व्रीहिपक्वं लाजजम्ब चिपीटकं। अनाचान्तेन भोक्तव्यं मिष्टान्नं वदरीफलं। त्रपुषं छिन्ननालञ्च नारिकेलं कपित्थकं। अनाचान्तेन भोक्तव्यं पनसं वदरीफलं। वृहन्नारदीये। खादितार्द्धं पुनः खादेन्मोदकानि फलानि वा। विष्णुधर्म्मोत्तरे। भोजनानन्तरं भूयः कुर्य्यात्ताम्बूलचर्व्वणमिति। अथास्य प्रयोगः। वह्निः प्रक्षालितपाणिपादमुखो द्विवासा रत्नपाणिर्द्विराचम्य गोमयोपलिप्त प्रावृतदेशे शुद्ध नीचासनोपविष्टो भूमिस्पृष्टदक्षिणपादोऽन्तर्जानुहस्तौ दक्षिणदिक्‌कृतजलपात्रो निर्ऋतिमारभ्य दक्षिणावर्त्तेन चतुरस्रादिमण्डलं निर्म्माय हैमराजतकांस्यपात्राणि तदभावे पत्रादीनि वा निधाय प्रक्षालयेत्। ततः आनीयमानमन्नं ओं भूर्भुवःस्वरित्यनेन प्रदक्षिणमुदकं परिषिच्य। ओं द्यौस्त्वा ददात्वित्यनेनाभिमन्त्रयेत्। ओं ओजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामाभिविश्वमसि विश्वायुः सर्व्वमसि सर्व्वायुरभिभूरिति अन्न अस्माकं नित्यमस्त्वेतदित्यनेन प्रणमेत्। अत्र तेजोसि ओसोसीति पाठ वैयम्य वारणाय तदीय व्याख्या यथा हे अन्नत्वं ओसोवीर्य्यमसि भवसि तथा सहः उत्साह असि तथाबलं सामर्थ्यं असि तथाभ्राजः दीप्तिरसि तथा देवानामिन्द्रादीनां धाम नाम तेजः शब्दवाच्यं असि विश्वं चराचरमसि तथा विश्वायुः विश्वस्य

जीवनमास। सर्व्वमास सर्व्वायुरसीति पुनरभिधानं आदरातिशयप्रदर्शनार्थं तथा आभभूः सर्व्वेषामदनीयानां श्रेष्ठः इति ब्राह्मणसर्व्वस्वे हलायुधः। ततः पृथिवी त्वा प्रतिगृह्णातु इत्यनेन तदन्नपात्रं वामेन पाणिना गृह्णीयात्। ततः ओं अन्नपते अन्नस्य नोधेह्यनमीवस्य शुष्मिणः प्रदातारं तारिष ऊर्ज्जं नोधेहि द्विपदे शं चतुष्पदे। इति ब्राह्मणसर्व्वस्वधृतं पठेत्। व्याख्या यथा। हे अन्नपते अन्नस्य पते अग्ने अन्नस्य भागं अस्मभ्यं धेहि देहि किम्भूतस्य अन्नस्य अनमीवस्य अमीवो व्याधिः सोऽस्मिन्नास्तीति अनमीव अर्थात् व्याधिकारणभिन्नस्यस्येत्यर्थः। पुनः किम्भूतस्य शुष्मिणः शुष्म बलं तदस्मिन्नस्तीति अस्य बलयुक्तस्येत्यर्थः। तथा हे अन्नपते प्रदातारं तारिष अन्नस्य प्रकर्षेण दातारं तारय वर्द्धय। तथा हे अन्नपते नोऽस्माकं द्विपदे भार्य्यापुत्रादिपरिजनाय चतुष्पदे गवादिपशवे च ऊर्ज्जं अन्नं धेहि अस्मभ्यं भार्य्यापुत्रादिपरिजनाय गवादिपशवे च अरोगकारिणं मङ्गलकारिणं च अन्नं धेहि अन्नदातारञ्च वर्द्धय। इत्यग्नौ याच्ञा वाक्यार्थः। अत्र भागमिति कर्म्मपदमध्याहार्य्यं। ततो भूमौ जलं दत्त्वा तदुपरि ओं भूपतये नमः ओं भुवः पतये नमः ओं भूतानां पतये नम इति बलित्रयं दद्यात्। ततः पूर्व्वस्मिन् ओं नागाय नमः एवं दक्षिणे ओं कूर्म्माय नमः उत्तरे ओं कृकराय नमः पश्चिमे ओं देवदत्ताय नमः मध्ये ओं धनञ्जयाय नमः। इत्येतैः पञ्चभिर्मन्त्रैः घृतान्नेन पञ्चभागान् दत्त्वा व्याहृतिभि

गायत्र्या वा संमन्त्र्य ऋतन्त्व सत्येन परिषिञ्चामीति माय सत्यं वर्त्तेन परिषिञ्चामीति प्रातरुक्त्वा ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः। त्वं यज्ञस्त्वं वषट्कारस्त्वं ब्रह्मा त्वं प्रजापतिः। आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् अमृतोपस्तरणमसि विष्णोरन्नमयस्य च इत्यनेन। अथवा अमृतोपस्तरणमसि स्वाहेत्यनेन जलगण्डूषं पीत्वा ओं जनार्द्दनः प्रीयतामिति वदेत्। ततः प्रत्येकं प्राणाहुतौ आर्द्रामलकप्रमाणमन्नमादाय अङ्गुष्ठतर्जनीमध्यमाग्रैः ओं प्राणाय स्वाहा तथा अङ्गुष्ठमध्यमानामग्रैः ओं अपानाय स्वाहा। ततोऽङ्गुष्ठानामिकाकनिष्ठाग्रैः ओं व्यानाय स्वाहा। ततस्तर्जनीं त्यक्त्वा चतुर्भिः ओं उदानाय स्वाहा। ततः सर्व्वाभिः ओं समानाय स्वाहा इत्येतैर्मन्त्रैर्दन्तसंस्पर्शं विना जिह्वया पञ्चग्रासान् गृह्णन् हस्तलग्नं तच्छेषं भूमौ त्यजेत्। ततो दधि-मध्वाज्य-पिष्टक-मोदक-क्षीराणां शेषमत्यजन् दिवा ... रात्रौ तिलदधिमधुशक्तुञ्च परित्यज्य सर्व्वाभिरङ्गुलीभिः प्राश्नीयात् ततो यथेच्छं भुक्त्वा पाणिमप्रक्षाल्य ओं अमृतापिधानमसि स्वाहेत्यनेन गण्डूषमर्द्धं पीत्वा भूमावर्द्धं त्यजेत् ततः सोदकमन्नं गृहीत्वा ओं अपूते नरके घोरे रौरवे प्रेतवासिनि ये काङ्क्षन्ति सदोच्छिष्टं तेभ्यो भूमौ प्रदीयते इति मन्त्रेण उच्छिष्टभागधेयेभ्यो दत्त्वा हस्तं मुखञ्च प्रक्षाल्याचम्य ओं अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठञ्च समाश्रितः। ईशः सर्व्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्। इत्यनेन ऊर्द्ध्वं स्तिष्ठन् दक्षिण-

पादाङ्गुष्ठे जलं दत्त्वा स्वस्थ उपविश्य स्वेष्टदेवतानाम् स्मरणं कृत्वा दक्षिणहस्तेन उभयहस्तेन वा हृदयदेशमभिमृषति प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वेति ततो पुराणोक्तेनोदरमभिमृषति यथा। ओं अग्निराप्यायतां धातून् पार्थिवान् पवनेरितान्। दत्तावकाशो नभसा जरयत्वस्तु मे सुखं। अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च। भवत्वेतत् परिणतौ ममास्त्वव्याहतं सुखं। प्राणापानसमानानामुदानव्यानयोस्तथा। अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखं। अगस्तिरग्नि वड़वानलश्च, भुक्तं मयान्नं जरयत्वशेषं। सुखञ्च मे तत् परिणामसम्भवं, यच्छत्वरोगं मम चास्तु देहे। विष्णुः समस्तेन्द्रियदेह देही, प्रधानभूतो भगवान् यथैकः। सत्येन तेनान्नमशेषमेतदारोग्यदं मे परिणाममेतु। वीर्य्यवत्ता तथैवान्नं परिणाममवैति हि। तेन सत्येन मद्भुक्तं जीर्य्यत्वन्नमिदं तथा। ततो जानूनी स्पृष्ट्वा शतपदगमनानन्तरं उपविश्य इतिहासपुराणादिना षष्ठसप्तमकौ नीत्वा अष्टमे लोकयात्रां कुर्य्यादिति॥ अथ भोजनान्तरकृत्यं॥ * ॥ मार्कण्डेययाज्ञवल्क्यौ। अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः। श्रवणञ्चेतिहासानां ततः कुर्य्यात् समाहितः। वेदव्यासोपि। आचान्तः साधुसङ्गेन सद्विद्यापठनेन च। वित्तवृद्धकथाभिश्च शेषाहमतिवाहयेत् सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना। दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत् समाहितः। दक्षः। इतिहास-पुराणाभ्यां षष्ठसप्तमकौ नयेत्।

अष्टमे लोकयात्राच वह्निःसन्ध्या ततः पुनः। मनुः। साय मन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्। वैश्वदेवं हि नामैतत् सायं प्रात विधीयते। सायमिति दिनान्ते सिद्धस्यान्नस्य पत्नी अमन्त्रं बलिहरणं कुर्य्यात्। स्नानमन्त्रु देवतोद्देशो न निषिध्यते। यत एतत् वैश्वदेवं नाम अन्नसाध्यं होमबलि-दानातिथिभोजनात्मकं तत् सायं प्रातश्च गृहस्थस्योपदिश्यते। इति कुल्लूकभट्टः। सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च। अनश्नतापि सततमन्यथा किल्विषी भवेदिति स्मृतिवचने अनश्नतेति पुंस्त्वनिर्द्देशात् पुरुषस्य वैश्वदेवहरविधानात्। सायमन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेदिति मनुवचने पत्न्यमन्त्रमित्यभिधानं प्रतिनिहितपत्नीपरं। अतएवोत्तरार्द्धे सायं प्रातर्विधीयते इत्यनुवाद्यं दर्शितमिति न च स्त्रीणां मन्त्रपाठानधिकारेण सादृश्याभावात् कथं प्रतिनिधित्वमिति वाच्यं। पुत्रो भ्राताथवा ऋत्विक् शिष्यस्तीर्थ तुल्याः। पत्नीश्रोत्रियया ज्याश्च दृष्टाश्च बलिकर्म्मणोरिति वचने दृष्टाः प्रतिनिधित्वेनेति शेष इति तत्त्वकार-लिखनेनास्य वाचनिक-त्वात्। विष्णुपुराणं। पुनः पाकमुपादाय सायमप्यवनीपते। वैश्वदेवनिमित्तं वैपत्न्यमन्त्रं बलिं हरेत्। निमित्तं नैमित्तिकं तेन पाकाभावे वैश्वदेव-बलिकर्म्मणोरनुष्ठानमिति अत्र पाक-पदं भोजनोपलक्षणं तेन पाकाभावेऽपि द्रव्यान्तरभोजनसत्त्वे तद्द्रव्येनैव वैश्वदेवबलिकर्म्माचरणमिति। एवञ्च प्रागुक्तवचने अनश्नतेत्यभिधानं दिवा वैश्वदेवबलिकर्म्मणोर्नित्यत्वज्ञापक-

मत्याह्निकाचारतत्त्वे विवृतमिति। गोसम्बरणे मस्वन्तः। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः। कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते। देवीपुराणे। गोपालको गवां गोष्ठे यस्तु धूमं न कारयेत्। मक्षिकानाम नरके मक्षिकाभिः स भक्ष्यते। विष्णुधर्म्मोत्तरे। दुःखिता धेनवो यस्य वसन्ति द्विजवेश्मनि। तस्य कीर्त्तिः सुखं लक्ष्मीर्हीयते च दिने दिने। शिवधर्म्मोत्तरे। यथा गावो न लिप्यन्ते पङ्कमूत्रपुरीषकैः। भाश्चैतादृशं कुर्य्यात् सुगमं सुखवर्द्धनं। धार्म्मे। गवां पञ्च पवित्राणि पुनन्ति सकलं जगत्। गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च। अमीषां भक्षणे पापं न तिष्ठति कलेवरे। अस्माद्घृतं दधि क्षीरं नित्यं खादन्ति धार्म्मिकाः। विशिष्टं सर्व्वद्रव्येषु गव्यमिष्टं परं महत्। यस्यास्य भोजनं नास्ति देवमूर्त्तिरपूतकः। अन्नाद्याः पञ्चरात्रेण सप्तरात्रेण वै पयः। दधि विंशतिरात्रेण घृतं मासेन जीर्य्यति। अगव्ये येतु भुञ्जन्ते मासमेकन्तु वै नराः। भोज्यन्तेषाञ्च मर्त्त्येऽस्मिन् प्रेतश्नाति सदैव हि। घृतक्षीरप्रदा गावो घृतयोन्या घृतोद्भवाः। घृतनद्यो घृतावर्त्ता स्ता मे सन्तु सदा गृहे। घृतं मे हृदये नित्यं घृतमाद्यैः प्रतिष्ठितं। गावो ममाग्रतो नित्यं गावः पृष्ठत एव च। गावश्च सर्व्वगात्रेषु गवां मध्ये वसाम्यहं। इत्याचम्य जपेन्मन्त्रं सायं प्रातरिमं शुचिः। सर्व्वपापक्षय स्तस्य स्वर्लोके पूजितो भवेत्। धार्म्मे। यथा गौश्च तथा विप्रो यथा विप्रस्तथा हरिः। हरिर्यथा तथा गङ्गा एते तुल्य-

फला: स्मृता:। गावो बन्धुर्मनुष्याणां मनुष्या बान्धवो गवां। गौस्तु यस्य गृहे नास्ति तद्बन्धुरहितं गृहं। गोमुखे चाश्रिता देवा षड़ङ्गै: सपदक्रमा:। शृङ्गयोश्च स्थितौ नित्यं सदैव हरिशङ्करौ। उदरे संस्थित: स्कन्द: शीर्षे ब्रह्मा स्थित: सदा। वृषध्वजो ललाटे च शृङ्गाग्रे इन्द्र एव च। कर्णयोरश्विनौ देवौ चक्षुषो: शशिभास्करौ। दन्तेषु मरुतो देवा: जिह्वायाञ्च सरस्वती। अपाने सर्व्वतीर्थानि प्रस्रावे चैव जाह्नवी। ऋषयो रोमकूपेषु पृष्ठे वैवस्वतो यम:। धनदो मारुतश्चैव दक्षपार्श्वसमाश्रितौ। वामपार्श्वे स्थिता यक्षा स्तेजस्वन्तो महाबला:। मुखमध्ये च गन्धर्व्वा: क्षुराग्रे पन्नगास्तथा। क्षुरायां पश्चिमे पार्श्वे अप्सराश्च समाश्रिता:। गोमये वसते लक्ष्मी: पवित्रा सर्व्वमङ्गला। हुङ्कारे चतुरो वेदा हाम्वाशब्दे प्रजापति:। चत्वार: सागरा: पूर्णा धेनूनाञ्च पयोधरे। गाञ्च स्पृशति यो नित्यं स्नातो भवति नित्यश:। अतो मर्त्त्य: स्पृशन् गाश्च सर्व्वपापै: प्रमुच्यते। गव्यां क्षुरोद्भवरज: शिरसा यस्तु धारयेत्। स च तीर्थजले स्नान: सर्व्वपापै: प्रमुच्यते। अत्रि:। यस्यैकापि गृहे नास्ति धेनुर्व्वत्सानुसारिणी। मङ्गलानि कुतस्तस्य कुतस्तस्य तम:क्षय:॥ * ॥ अथ गोदोहनविधि:॥ * ॥ भविष्यपुराणे। मासैकं पालयेद्वत्सं द्वितीये द्विस्तनं दुहेत्। तृतीये त्रिस्तनं दुह्यं यथा दुग्धं यथा बलम्। द्विस्तनं दुहेदित्यार्षं। अथ रात्रौ शिशुमारदर्शनं। शिशुमारमधिकृत्य विष्णुपुराणं। यदह्ना कुरुते पापं दृष्ट्वा तन्निशि मुच्यते।

यावत्यश्चैव तारा स्युः शिशुमाराश्रिता दिवि। दृष्ट्वा तावन्ति वर्षाणि जीवत्यभ्यधिकानि च॥ * ॥ अथ शयनविधिः। विष्णुपुराणं। कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही। गच्छेत् शय्यामकाठिनामपि दारुमयीं शुभां। नाविशालां न वा भग्नां ना सामां मलिनां न च। न च मन्त्रमयीं शय्यामधितिष्ठेदनास्तृतां॥ बृहद्धर्म्मपुराणे। शय्या भार्य्या शिशुर्व्वस्त्रमुपवीतं कमण्डलुः। आत्मनः शुचिरेतानि न परेषां कदाचन। नोदक्शिराः स्वपेन्मर्त्यो न च प्रत्यक्शिरानरः। वैदिकैर्गारुड़ैर्म्मन्त्रैः कृत्वा रक्षां विशेषतः। न परेषां कदाचनेति अनुमतिं विनेति पूरणीयं। अन्यथा तिथ्यानुपपत्तेः। हारीतः। विष्णुं नत्वा इष्टदेवतां स्मरन् सावित्रीं विचिन्त्य माङ्गल्यानि शृण्वन् स्वपेत्। व्यासः। शुचौ देशे विविक्ते तु गोमयेनोपलेपिते। प्रागुदकप्लवने चैव सम्विशेत्तु सदा बुधः। माङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने निधाय च। वैदिकैर्गारुड़ैर्म्मन्त्रै रक्षां कृत्वा स्वपेत्ततः। विष्णुपुराणे। प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप। सदैव स्वपतः पुंसो विपरीतन्तु रोगदं एतच्च स्वगृहविषयं। स्वगृहे प्राक्शिराः शेते आयुष्ये दक्षिणाशिराः। प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः। इति गर्गवचनात्। तत्रैव,—नमो नन्दीश्वरायेति प्रोक्त्वा यः स्वपते नमः। तस्य कुष्माण्डभूतेभ्यो न भयं विद्यते क्वचित्। महाभारते। यो जगत् कारुणाज्जातो जरत्कारो महायशाः। आस्तिकः सर्पसत्रेभ्यः पन्नगाननुरक्षति। तं

स्मरन्तं महाभागा न हि हिंसन्ति हिंसकाः। दिवा वा यदि वा रात्रौ नैव सर्पभयं भवेत्। सर्पापसर्प भद्रन्ते गच्छ सर्प वनान्तरं। जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर। अथास्य प्रयोगः॥ * ॥ विष्णुं स्मृत्वा सावित्रीं विचिन्त्य माङ्गल्यानि शृण्वन् पूर्णकुम्भं शिरःस्थाने निधाय नमो नन्दीश्वरायेति प्रोक्ता। ओँ सर्पापसर्प भद्रन्ते गच्छ सर्प वनान्तरं। जन्मेजयस्य यज्ञान्ते आस्तिकवचनं स्मर इति पठेत्। ततो वैदिक गारुड़ मन्त्रेण रक्षाकरणं यथा। विवस्वान् ऋषिः परमात्मा देवता जगतीच्छन्दः शयने रक्षाकरणे विनियोगः। मन्त्रो यथा। ओँ सप्तर्षयः प्रहिताः शरीरे सप्त रक्षन्ति सदनप्रमादं सप्तापः स्वपतो लोकमीयुः। तत्र जाग्रतोऽस्वप्नजौ सत्रसदौ च देवौ। अस्यार्थः। सप्त ऋषयः प्राणिनां शरीरे प्रहिताः अवस्थिताः, के ते बुद्धिश्चक्षुः श्रोत्रं नासा त्वक् जिह्वा मन एते सप्तर्षयः त एव सप्त स्वपतः पुरुषस्य लोकं हृदयस्थानं गच्छन्तु रक्षन्ति च शरीरं। एवं सप्तापश्च रक्षन्ति एते सप्त आपः शुक्र-शोणित-वसा-मज्जा-श्लेष्माश्रु-मूत्राणि। किञ्च तस्यामवस्थायां प्राणापानौ वायुः जाग्रतः जागरणं कुरुतः। सत्रसदौ सत्रे देशे स्थायिनौ अस्वप्नजौ स्वप्नं ययोर्न विद्यते इति ब्राह्मण-सर्व्वस्वे। अथ शयननिषेधः। मार्कण्डेयः। शून्यालये श्मशाने च वृक्षमूले चतुष्पथे। महादेवगृहे वापि मातृ-वेश्मनि न स्वपेत्। विष्णुः। नार्द्रपादः स्वपेन्न पलाशशयने न पञ्चदारुकृते न विद्युद्दग्धकृते न गजभग्नकृते नाग्निप्लुष्टे न

पदसिक्तद्रुमजे न बालुकामध्ये न च पल्लमध्ये न धान्य-गो-गुरु-हुताशन-सुराणामुपरि। नोच्छिष्टे न दिवा न सन्ध्यायां न तथा पर्व्वतमस्तके न चाशुचाविति। प्रचेताः। न सन्ध्यायां शयीत न देवसमीपे नाशुचिर्न नग्ना न भूतयज्ञायतने न श्मशाने वल्मीकमहावृक्षच्छायासु च ॥ * ॥ अथ व्यवायानु-सरणं ॥ * ॥ याज्ञवल्क्यः। षोड़शर्त्तुनिशा स्त्रीणां तासु युग्मासु सम्विशेत्। ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्जयेत्। मनुः। तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या। त्रयोदशी च शेषाः स्युः प्रशस्ता दश वा त्रयः। एकादशी-त्रयोदश्यौ ऋतोर्न पक्षस्येति मदनपारिजातः। हारीतः। चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानं तदुपेतं ब्रह्मगर्भं सन्दधातीति। तथा मनुः। शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला। दैवे कर्म्मणि पैत्रे च पञ्चमेऽहनि शुध्यति। ततश्चतुर्थ्यां स्त्रीगमनस्य विहितप्रतिषिद्धत्वा-द्विकल्पः स च व्यवस्थितः। रजोनिवृत्तौ चतुर्थ्यां विधिः। तदनिवृत्तौ निषेधः। अनेनैवाभिप्रायेण मनुः। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला। साध्वी गर्भाधानादि-विहित-कर्म्म-योग्येत्यर्थः। इति पारिजातः। वृद्धमनुः। युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। विधर्म्मिणोऽह्नि पर्व्वाख्ये सन्ध्याकाले नपुंसकाः। स्त्रियाः शुक्राधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत्। समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः। याज्ञवल्क्यः। एवं गच्छन् स्त्रियं क्षामां

मघां मूलाञ्च वर्जयेत्। शुभस्थेन्दौ सकृत् पुत्रं लक्षण्य जनयेत् पुमान्। क्षामां आहारसङ्कोचादिना कृशामिति भास्करः। सकृदेकस्यां रात्रौ एकवारमेव गच्छेदित्यर्थः। इति मदनपारिजातः। विष्णुपुराणं। ऋतावुपगमः शस्तः स्वपत्न्यामवनीपते। पुन्नामर्क्षे शुभे काले ज्येष्ठा युग्मासु रात्रिषु। स्नातः सुगन्धधृक् प्रीतो नाध्मातः क्षुधितोपि वा। सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत्। ऋतुकालाभिगमनं पुंसा कार्य्यं प्रयत्नतः। सदैव वा पर्व्ववर्ज्यं स्त्रीणामभिहितञ्च यत्। ऋतौ गमने स्नानमाह आपस्तम्बः। ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतं। अनृतौ तु सदाकार्य्यं शौचं मूत्रपुरीषवत्। द्वावेतावशुची स्यातां दम्पती मैथुनङ्गतौ। शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्। अथ व्यवायप्रतिषेधः॥ विष्णुपुराणं। नान्ययोनावयोनौ वा नोपयुक्तौषधस्तथा। द्विजदेवगुरूणाञ्च व्यवायी नाश्रमे भवेत्। चैत्यचत्वरतीर्थेषु नैव नैव चतुष्पथे। नैव श्मशानोपवनसलिलेषु महीपते। प्रोक्तपर्व्वस्वशेषेषु नैव भूपालसन्ध्ययोः। गच्छेद्व्यवायं मतिमान् न मूत्रोच्चारपीड़ितः। पर्व्वस्वभिगमोऽधन्यो दिवा पापप्रदो नृप। भुवि रोगावहो नृणामप्रशस्तो जलाशये। परदारान्न गच्छेच्च मनसापि कदाचन। किमु वाचास्ति बन्धोपि नास्ति तेषु व्यवायिनां तेषु नवदारेषु व्यवायिनां बन्धोपि अस्ति ततः किं विड़म्बनं नास्तीत्यहमुवाच इत्यर्थः। मृतौ नरकमभ्येति हीयतेत्रापि चायुषः। परदाररतिः

पुंसामुभयत्रापि भीतिदा। इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत्। यथोक्त-दोषहीनेषु सकामिष्वन्टतावपि। ननु अऋतुगमनस्य रागप्राप्तत्वे नियमः, परिसंख्यावेति? नाद्यः, अन्टतुगमनाभावे प्रत्यवायाभावात्। नापि द्वितीयः। दोषत्रयग्रासात् ऋत्वभिगमे तु नियम एव। ऋतौ नाभिगमेद्यस्तु स्वस्त्रियं मनुजेश्वर। स याति रौरवं घोरं ब्रह्महत्याञ्च विन्दति। इति वृहन्नारदीयवचनं। ऋतुस्नाताञ्च यो भार्य्यां सन्निधौ नाधिगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशय इति पराशरवचनाभ्यामगमने दोष श्रवणात् ऋत्वभिगमनियमे पर्व्वणः पर्य्युदस्तत्वमिति तत्त्वकारलिखनाच्च। अन्टतुगमने कागतिरिति चेदुच्यते परिसंख्यैव न पुनर्नियमः। गमनाभावे दोषश्रुतेरभावात् श्रुतार्थपरित्यागाश्रुतार्थ-कल्पन-प्राप्तवाधरूपदोषत्रयस्य, न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति। लोकेव्यवायामिव मद्यसेवा नित्यास्ति जन्तोर्नहि तत्र चोदना। व्यवस्थितिस्तेषु विवाहयज्ञ-सुराग्रहैराशु निवृत्तिरिष्टेति मनुभागवतवचनाभ्यां महाफलेष्टत्वयोरन्यथानुपपत्त्या स्वी-कर्त्तव्यत्वाच्च। अथैवं परिसंख्याविधौ रागमात्रप्राप्तत्वेनाष्ट-दोषग्रस्तविकल्पप्रसक्तेरभावात्॥ दोषश्रुतेश्च ब्रह्मचारी स्त्रियां न गच्छेदित्यादि विधौ नञः पर्य्युदासासम्भवे प्रसज्य-परतैव। षोड़शर्त्तुनिशा स्त्रीणां तासु युग्मासु सम्विशेत्। ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्जयेदिति याज्ञवल्कीय-

नियमे किं ब्रह्मचार्य्यपि तासु युग्मासु संविशेदिति पूर्व्वार्द्धा-न्वये निषेध-प्रतिप्रसवपरत्वं, उत ब्रह्मचारीतरस्तासु युग्मासु संविशेदिति पर्य्युदासपरत्वं? अत्रकादशीतत्त्वीय-उपवास-समन्वयप्रकरणे मिताक्षरा ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्जयेदिति ब्रह्मचर्य्यस्खलनदोषो नास्तीति व्याख्याने, न ब्रह्मचार्य्यपि तासु युग्मासु संविशेदिति नियमविधेः सर्व्व-विषयत्वं स्वीकृत्य आड्वासरादौ ऋत्वभिगमने दोषो नास्तीति व्याचष्टे, तत्त्वकारोऽपि तत्र ऋतुस्नातां तदहोरात्रं परिहरेदिति शङ्खलिखितवचनविरोधं दर्शयित्वा ब्रह्मचर्य्यफलं प्राप्नोतीति शूलपाणि व्याख्यानमिङ्गिताकारेण स्वीकुर्व्वन् व्रतादौ सङ्ग-मनोपदेशेन शूलपाणेरभिप्रायस्य स्पष्टीकरणव्याजमाश्रित्य स्वमतमपहृतवान्। ऋतुस्नातां तदहोरात्रं परिहरेदिति वचनविरोधापरिहारात्। व्रतादौ सङ्गमने प्रमाणाभावाच्च अतएव मिताक्षरा-व्याख्यानं चिन्त्यमिति शयनप्रकरणे त[illegible]-कारेणाभिहितमिति तस्मादिदमेव तस्य गूढहृदयं वर्णया-मास। ऋत्वभिगमनियमे ब्रह्मचारिणः पर्य्युदस्तत्वमेव, तथा च याज्ञवल्क्यवचनमेवं व्याख्यायते। पर्व्वाणि आद्याश्चतस्रो निशाश्च प्राप्य ब्रह्मचार्य्येव भूयात्। न पुनर्ब्रह्मचार्य्यपि तासु युग्मासु संविशेदिति पूर्व्वार्द्धान्वयः। ततश्च यथा पर्व्वाद्य-चतुर्निशानामधिकरण-पर्य्युदस्तत्वं तथा ब्रह्मचारिणः कर्तृ-पर्य्युदस्तत्वमिति तत्त्वं। तर्हि वर्जयेदित्यस्य किं फलमिति चेत् यतः आड्वासरवत् ब्रह्मचार्य्येव भूयात् अतस्तानि ताश्च

वर्जयेदिति स्पष्टीकरणार्थानुवादरूपं। यद्वा ब्रह्मचार्य्यपि वर्जयेदिति नियमविधौ तु पर्य्युदासः। अप्यर्थ एव शब्दः। तेन पर्व्वाणि आद्यांश्चतस्रश्च वर्जयेदिति च कालपर्य्युदास इति। न च, तासु युग्मासु साम्वशोदिव्यस्य ब्रह्मचारीतरपरत्वेन ऋत्वभिगमने ब्रह्मचर्य्यस्खलनदोषस्वीकारे, स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः संकथनादपि ब्रह्मचर्य्यं विपद्येत; नदारेष्वद्दृ तसङ्गमादिति देवलवचनं विरुध्यत इति वाच्यं; न दारेष्वित्यत्र दारेतरास्वित्यर्थकल्पनया परस्त्रीष्वेव ब्रह्मचर्य्यविपत्तिनिवेशात् तेष्वपि वचनान्तरेण ब्रह्मचर्य्यस्खलने दोषाभावस्याचुक्तत्वाच्च। तथाच ब्रह्मचारिणः स्त्रीमात्रगमनं निषिद्धमिति। न च तर्हि न दारेष्वित्युपादानं विफलमिति वाच्यं प्रदर्शनमात्रकीर्त्तने मुनीनां प्रायः स्वरसदर्शनात्। वक्रूक्तीष्टशाब्दसन्दर्भाच्च। [illegible] पातिनां मैथुनसंकल्पादीनां ब्रह्मचर्य्यनाशकत्वाभावे [illegible] विरूपाभिनिवेश एव विचारमल्लानां॥ यद्वा देवलवचनं [illegible] व्याख्यायते न दारेष्विति दारेषु संप्रेक्षणादौ कृते ब्रह्मचर्य्यं न विपद्यते अपितु दारेषु सङ्गमादेव ब्रह्मचर्य्यं विपद्येत इति। अन्यथा श्राद्धवासरादौ समस्तनिषिद्धस्थले ऋत्वभिगमस्यानुज्ञाने महाजनवाध एव स्यादित्यलं वागजालेनेति॥ अतो निषेधविधीनां परिसंख्याविधौ रागप्राप्तवाधपरत्वं दोषाविष्करणपरत्वञ्च नियमविधौ पर्य्युदासपरत्वमिति सर्व्वसामञ्जस्यं॥ *॥ विष्णुपुराणं॥ नास्नातान्तु स्त्रियं गच्छे-

नातुरां न रजस्वलां । नाशिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिनीं । नादक्षिणां नान्यकामां नाकामां नान्य-योषितं । क्षुत्क्षामामतिभुक्तां वा स्वयञ्चैभिर्गुणैर्युत: । गर्भिनीं रतिकामेतरां । अद्य स्त्रीवा विजनिष्यमाना: पतिभि: सह शयन्ते इति स्त्रीणामिन्द्रदत्तो वर इति वशिष्ठवचनात् । विजनिष्यमाना: प्रसविता: । शयन्ते शेयते लठारूपं छान्दसं । विष्णु: । न श्राद्धं भुक्त्वा न श्राद्धं दत्त्वा नोपमन्त्रित: श्राद्धे न स्नात्वा न हुत्वा न व्रती नोपोष्य नातिभुक्त्वा वा न दीक्षित: । न देवालयश्मशानशून्यालयेषु । न वृक्षमूलेषु न दिवा न सन्ध्ययो: न मलिनां न मलिन: नाभ्यक्तां नाभ्यक्त: न रोगार्त्तां न रोगार्त्त: । पराशर: । ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति । सा मृता नरकं याति विधवा च पुन: पुन: । अदुष्टां पतितां भार्य्यां यौवने य: परित्यजेत् । सप्त जन्म भवेत् स्त्रीत्वं वैधव्यञ्च पुन: पुन: । दरिद्रं व्या[illegible]तं मूर्खं भर्त्तारं या न मन्यते । सा मृता जायते व्याली वैध-व्यञ्च पुन: पुन: । प्रकारान्तरमाह ग्रन्थान्तरे । प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी तृतीये रजकी प्रोक्ता चतुर्थे-ऽहनि शुध्यति । रामं दिनं परित्यज्य यावद्दहति शोणितं । तावदेव ऋतु: स्त्रीणां रात्रय: षोड़श स्मृता: । चतुर्थे जायते पुत्र: अल्पायुर्गुणवर्ज्जित: । विद्यागुणपरिभ्रष्टो दरिद्र: क्लेश-भाजन: । पञ्चमे जायते कन्या दुर्भगा नित्यदु:खिता: । स्वल्पायुष्मती वेश्या कुरूपा विधवा स्मृता । षष्ठे तु जायते

पुत्रो न दोषो न गुणो तथा। मूर्खो मृदुः कुरूपश्च पुत्र-सन्ततिवर्जितः। सप्तमे जायते कन्या मूढदुष्टस्य नायिका। जीवन्ती सा मृता लोके धनधान्य-विवर्जिता। अष्टमे जायते पुत्रः पितुर्व्वित्तविनाशकः। व्याधियुक्तो दुर्मुखश्च प्रायो निष्ठुरमानसः। नवमे जायते कन्या मेधायुःपुत्रसंयुता। योग्या रूपवती धीरा स्वामिनो हितकारिणी। दशमे जायते पुत्रो धनधान्यमहेश्वरः। यौवने बहुशो विद्यामेधायुःपुत्र-संयुतः। रुद्रे च जायते कन्या दयायुक्ता सुपुत्रिणी। गुण-वती सुशीला च सुरूपा च प्रियम्बदा। द्वादशे जायते पुत्रो यशो विद्या-दयान्वितः। धनी च बीजपुत्रश्च मतिमान् लोकपालकः। त्रयोदशे च कन्या स्यात् कुलद्वयमनोहरा। सती पुत्रवती साध्वी धर्म्मत्रयहितैषिणी। चतुर्द्दशेऽह्नि पुत्रः स्यात् कुलीनो यशसान्वितः। शुद्धकीर्त्तिर्म्महावीर्य्यो मेधा-लक्ष्मी समन्वितः। पञ्चदशे तु कन्या स्यात् भूपालक-मनो-हरा। अर्द्धप्राणहरा भर्त्तुः सती धर्म्मपरायणा। धर्म्मज्ञश्च कृतज्ञश्च शमयुक्तो महीपतिः। षोड़शे जायते पुत्रः सत्यवादी जितेन्द्रियः। इत्यादिवचनादुक्तऋतुकालषोड़शरात्रमध्ये दशम-द्वादश चतुर्द्दश-षोड़श-रात्रिषु पुत्रार्थिना निषेकः कार्य्यः। अथ निद्रानुसरणं। * ॥ गदप्रमदयज्ञाहि शयने भयदा इमे स्वपेत् द्वितीय-प्रहरे चित्तेनैव सदा बुधः। पार्श्वाभ्यान्तु तृतीये तु चतुर्थे तूदरेण तु। एतत्तु द्विजेतर-विषयं। प्रदोष-पश्चिमौ यामौ वेदाभ्यासेन वै नयेत्। यामद्वयं

ययानन्तु ब्रह्मभूयाय कल्पते। इति दक्षवचनात्। रात्रेः पश्चिमयामे सुप्तोत्थितो वेदमधीत्य श्रान्तो न पुनः स्वपेत्। नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ। न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति मनुवचनादिति कुल्लुकभट्टः॥ आयुर्व्वेदे। श्वासानष्टौ समुत्तानो तद्द्विः पार्श्वे तु दक्षिणे। ततस्तु द्विगुणं वामे ततः सुप्यात् यथ सुखं। निद्रा-समयमासाद्य ताम्बूलं वदनात्त्यजेत्। पर्य्यङ्कात् प्रमदां भालात् पुण्ड्रं पुष्पाणि मस्तकात्॥ *॥ *॥ *॥ * इति महाराजाधिराज--कोचविहाराधिपति-मन्त्रि-श्रीशिवप्रसादशर्म्म-सङ्कलिते स्मृति-तत्त्वावशिष्टे आह्निकाचार-तत्त्वावशिष्टं समाप्तं॥ * ॥

# रङ्गपुर-परिषद्ग्रन्थावली ।

१ । चण्डिकाविजयं ( महाकाव्यम् )

रङ्गपुरकवि-द्विजकमललोचनविरचित आदिग्रन्थोऽयं शक्ति-विषयकः, रङ्गपुरस्थ कुण्डोपरगणान्यतमभूस्वामिनः स्वर्गीय गङ्गाधररायचतुर्धुरीणस्य महात्मनः स्मृत्यर्थं तत्पुत्रस्य श्रीमतः मृत्युञ्जयरायचतुर्धुरीणस्य महानुभवस्य साहाय्येन प्रकाशितः। सदस्यानां मध्ये विनिमयं विना वितरितश्च । अस्य पत्रसंख्या पञ्चशतं, मूल्यं अर्द्धमुद्रामात्रं, उत्कृष्टबन्धनीसमन्वितस्य द्वादशानकमात्रं ।

२ । गौड़ेतिहासः प्रथमखण्डः ( हिन्दुराजत्वं )

मालदहनिवासिपण्डितश्रीयुक्तरजनीकान्तचक्रवर्त्तिना महात्मना सङ्कलितोऽयमितिहासः । परिषद्ग्रन्थान्तर्गतः मुद्रितः, मूल्यं तुर्य्यांशहीनमुद्रामात्रं । उत्कृष्टबन्धनीयुक्तस्य मुद्रामात्रम् ।

३ । रङ्गपुरेतिहासः प्रथमभागः ( यन्त्रस्थः )

ग्रन्थोऽयं रङ्गपुर-डिष्ट्रीक्टबोर्डसाहाय्येन अनया परिषदा सङ्कलितः प्रकाशितः सदस्यानां मध्ये वितरितश्च भविष्यति । खृष्टीय १९१०।११ अब्दे अस्य ग्रन्थस्य मुद्रणव्ययमध्ये प्रागुक्त-साहाय्यं पञ्चशतमुद्रामात्रं परिषद्गृह्णाति स्म । अस्मिन् ग्रन्थे रङ्गपुरस्य पुरातत्त्वं कृषिवाणिज्यादिविवरणं चित्रादिना सह प्रकाशितं भविष्यति ।

४। वगुड़ा-सेरपुरेतिह्नाम:

ग्रन्थोऽयं सुलेखकश्रीयुक्तहरगोपालदासकुण्डुमहाशयेन सङ्कलित:। सदस्येतरजनानां मध्ये मूल्यं अर्द्धमुद्रामात्रं।

५। वगुड़ेतिह्नाम:

श्रीयुक्तप्रभासचन्द्रसेन बि. एल् महाशयेन रचितेऽत्र ग्रन्थे समग्रवगुड़ाप्रदेशस्य यावतीयविवरणं ग्रन्थकारेण सविस्तृतं सङ्कलितं। मूल्यं द्वादशानकं सभ्यपक्षे तु अर्द्धमूल्यं।

६। पालिप्रकाश:

श्रीयुक्तविधुशेखरभट्टाचार्य्यशास्त्रिणा प्रणीत:। मूल्यं तुरीयांशमुद्राहीनतङ्कात्रयम्। बन्धनीयुक्तस्य मुद्रात्रितयं। ग्रन्थोऽयं प्रवेशक-पालिपाठावली शब्दकोष: सह वर्त्तते। पालिशिक्षोपयोगो सुवृहद्ग्रन्थोऽयं सार्द्धत्रिशतपत्राङ्केन सम्पूर्ण:।

७। अद्भुताचार्य्यस्य रामायणम् ( आदिकाण्ड: )

उत्तरवङ्गस्थदं सुवृहद्रामायणम्। दिघापतियाराजकुमार सुयोग्यसाहित्यसेवि श्रीयुक्तशरत्कुमार राय एम्. ए महोदयस्य धीमत: अर्थानुकूल्येन तथा गौड़ेतिह्नामप्रणेतु: पण्डितश्रीयुक्तरजनीकान्तचक्रवर्त्तिन: सुचेतस: सम्पादकतया विश्वकोषयन्त्रे खण्डश: प्रकाशितं। अस्य आदिकाण्डस्य मूल्यं मुद्रामात्रम्। ग्रन्थस्य प्रेरणाव्यय: पृथग् दातव्य:।

८। कर्पूरस्तव: ( वङ्गभाषया मर्म्मानुवाद: )

साधकप्रवरश्रीयुक्तश्यामचन्द्रवन्द्योपाध्यायेन सङ्कलित:। ग्रन्थस्य प्रेरणव्यय सार्द्धआनकं देयं।

उल्लिखितानि पुस्तकानि प्रेरणादेशलिपिप्रमाणमात्रेण भि.पि. योगेन प्रेषणीयानि।

रङ्गपुरसाहित्यपरिषत्-पत्रिका ( त्रैमासिकी )
श्रीयुक्तभवानीप्रसन्न लाहिड़ी काव्य-व्याकरणतीर्थ सम्पादिता।
वार्षिकमूल्यं मुद्रात्रयं डाकव्यय: माष्काधिकरजत-निष्कार्द्धं ( ।४० )

पत्रिकामिमां "रङ्गपुरसाहित्यपरिषद:" पारिषदा: मूल्यं तथा डाकव्ययं विना प्राप्नुवन्ति। सन्ति—वङ्गभाषया विविध-विषयिण्य: सामयिकपत्रिका वहुला: किन्तु प्रयोजनमस्ति स्वतन्त्रं एकया पत्रिकया केवलं भाषातत्त्वं, भाषाविज्ञानं, प्राचीनग्रन्थादे: समालोचनं प्राचीनकवीनां विवरणं उत्तरवङ्गा-साममप्रदेशयो: पुरातत्त्वं समाजतत्त्वादिकं च प्रकाशयितुं। तदभावमोचनार्थं रङ्गपुरसाहित्यपरिषत्पत्रिकेयं प्रकाश्यते। अस्यां वङ्गपरिभाषासमालोचना, उत्तरवङ्गासामप्रदेशयो: प्राचीनकवीनां विवरणं वङ्गीयव्याकरणादिविषयका: प्रवन्धाश्च प्रकाश्यते। इतोऽधिकम् एसियाटिकसोसाइटी नाम सभा यथा नानादिग्देशाद्भारतवर्षस्य ऐतिहासिकपुरातत्त्वविषये प्राचीनकीर्त्तिभग्नावशेषप्रतिकृतिं तत्तद्विवरणं प्राचीनैति-

ऐतिहासिकस्थानविवरणं प्राचीनशिलालिपिताम्रलेखमुद्रालेख-प्रभृतीश्च चित्रैः सह प्रकाशयति तथा अस्यामपि तत्तद्विषयाः प्रकाशिताः राजन्ते, मौलिकानुसन्धानफलमपि अत्र प्रकाशते, तथा प्रागुक्तसभा यथा नानादिग्देशे पण्डितप्रेरणया अमुद्रितसंस्कृतपुस्तकविवरणं प्रकाशयति, तथा रङ्गपुर-साहित्यपरिषदपि उत्तरवङ्गासामप्रदेशयोः यत् अमुद्रित-पुस्तकविवरणं प्राप्नोति तदत्र पत्रिकायां प्रकाशितं भाति। पत्रिकेयं धीमतां सतां वङ्गीयानां अवश्य पठनीया, पत्रिकाया यत् ज्ञातव्यं यद्वा मुद्रादि प्रेरणीयं तत्तत् निम्नसाक्षरकारिणः सकाशे लेखनीयं प्रेषनीयञ्च।

श्रीसुरेन्द्रचन्द्र राय चौधुरी—सम्पादकः
रङ्गपुर-साहित्यपरिषत्कार्य्यालय, रङ्गपुर।